युधि द्विपा रामशरेण दारिताः कृतत्वराधोरणमुक्तकन्धराः।
यतो धरण्यामनुकृष्टवारिदं दिवः पतन्तो रुरुजुः स्वसैनिकान् २९

शरासने वर्त्मनि लक्ष्यभेदने परैरुपालक्ष्यत नेषुसन्ततिः।
ऋतेऽपि हेतोरिव दीर्णवक्षसो निपेतुरस्य प्रधने सुरद्विपः ॥ ३० ॥

यथा गुणस्य ध्वनयः समुद्ययुर्निपातशब्देन समं युधि द्विपाम्।
तथाऽस्य योद्धुर्धनुषो विनिर्गता जवे विशेषं विदधुः शिलीमुखाः ३१

---

युधीति। युधि आजौ 'समित्याजि समिद्युधः' इत्यमरः। रामस्य रामभद्रस्य शरः बाणः तेन दारिताः भेदिताः 'दारिते भिन्नभेदितौ' इत्यमरः। अतएव कृता त्वरा यैः एतादृशा ये आधोरणा हस्तिपकाः 'आधोरणा हस्तिपकाः' इत्यमरः। तैः मुक्ता त्यक्ता कंधरा ग्रीवा येषां ते 'शिरोधिः कंधरेत्यपि' इत्यमरः। स्वपातभिया आधोरणैस्त्यक्तकंधरा इत्यर्थः। वारीणि उदकानि ददतीति वारिदाः 'आतोऽनुपसर्गे कः' इति कप्रत्ययः। अनुकृष्य अनुकृत्वा वारिदाः मेघा यस्मिन् कर्मणि तत् अनुकृष्टवारिदं पतनक्रियाया विशेषणमिदं 'वारिदोऽम्बुभृत्' इत्यमरः। दिवः आकाशात् पतन्तः पत् गतौ शतृप्रत्ययः। द्विपाः द्वाभ्यां शुण्डा-मुखाभ्यां पिबतीति द्विपाः। हस्तिनः युधीति योगविभागात् कः धरण्याः पृथिव्यां यतः गच्छतः इण् धातोः शतृप्रत्ययात्तस्य द्वितीयान्तमिदं रूपं एतादृशान् स्वसैनिकान् स्वस्य सैनिकाः तान् रुरुजुः बभञ्जुः ॥ २९ ॥

शरासन इति। शरासने धनुषि 'शरासनकोदण्डकार्मुकं' इत्यमरः। वर्त्मनि मार्गे लक्ष्यस्य शरव्यस्य भेदनं विदारणं तस्मिन् इषूणां बाणानां संततिः परंपरा परैः शत्रुभिः नोपालक्ष्यत न ज्ञातायतेत्यर्थः। एतेन श्रीरामभद्रस्य हस्तलाघवं दर्शितं। अतएव हेतोर्ऋतेऽपीव हेतुं विनापीवेत्यर्थः। 'अन्यारादितरर्तेति' ऋते शब्दयोगे पञ्चमी। दीर्णं विदीर्णं वक्षः उरो येषां ते दीर्णवक्षसः एतादृशाः सुरद्विषः सुरान् द्विषन्तीति तथा असुराः सुप्युपपदे क्विप् अस्य श्रीरामभद्रस्य प्रधने युद्धे 'प्रधनं प्रविदारणमित्यमरः'। निपेतुः निपूर्वात्पत्लृ इत्यस्मात् लिट् एत्त्वाभ्यासलोपौ। उत्प्रेक्षालंकारः ॥ ३० ॥

यथेति। युधि युद्धे यथा गुणस्य धनुर्गुणस्य ध्वनयः शब्दाः द्विपाः धनूंषि निपातस्य पतनस्य शब्दः ध्वनिः तेन समं सह 'साकं सत्रा समं सहेत्यमरः।' समुद्ययुः समुज्जग्मुरित्यर्थः। तथा तेन प्रकारेण योद्धुः युध्यतीति योद्धा तस्य योद्धुः युधप्रहारे तृच् एतादृशस्य अस्य रामभद्रस्य धनुषः शरासनात् विनिर्गता विनिष्क्रान्ता शिलीमुखाः बाणाः। जवे वेगे 'रंहस्तरसी तु रयः स्यदः जवः' इत्यमरः। विशेषं आधिक्यं विदधुः चक्रुः। विपूर्वाद्धधाते द्धनर्थे वर्तमानात् लिट्। सहोक्त्यलंकारः ॥ ३१ ॥

सुरारिहस्तच्युतशस्त्रजालकान्यलब्धलक्ष्याणि चिरं नभस्तले।
विशुष्कपत्रप्रतिमानि तच्छरप्रतानवातोपहतानि वभ्रमु॥ ३२॥
प्रभञ्जनेनाहितपक्षतिध्वनि प्रसर्पतां राजसुतस्य पत्रिणाम्।
ऋभुद्विपस्ते प्रतिलोममाहृतैः शरैर्निजैरेव दृढं निजघ्निरे॥ ३३॥
क्षतं पृषत्केन पतत्रिणां पथः पतद्बलं तत्तनयस्य भूभृतः।
निपातखेदादशिवे भुवस्तले भियेव तूर्णं जहुरन्तराऽसवः॥ ३४॥

---

सुरारीति। विशुष्काणि यानि पत्राणि पर्णानि तानि प्रतिमा उपमा येषा तानि 'प्रतिमान प्रतिबिंब प्रतिमा प्रतियातना प्रतिच्छाया' इत्यमर। अतएव तस्य रामचद्रस्य ये शरा बाणा तेषा ये प्रताना समूहा तनुविस्तारे भावे घञ्। वातेन वायुना उपहतानि ताडितानि अतएव वाय्वधीनत्वेन इतस्ततो गमनात् न लब्ध प्राप्त लक्ष्य शरव्य यै एतादृशानि सुराणा अरय शत्रव दैत्या तेषा हस्तेभ्य च्युतानि यानि अस्त्राणि जालकानि समूहा नभस्तले आकाशमार्गे चिर चिरकाल बभ्रमु भ्रमुचलने लिट्॥ ३२॥

प्रभजनेनेति। ऋभून् देवान् द्विषति ते ऋभुद्विष दैत्या 'आदित्या ऋभव' इति कोश सत्सूद्विषेति क्विप्। आहित पक्षतीना पक्षमूलाना ध्वनि शब्दो यस्मिन् तत् आहितपक्षतिध्वनी यथास्यात्तथा प्रसर्पणक्रियाया विशेषणमिद। 'पक्षात्तिरितिसूत्रेण' तिप्रत्यय 'स्त्री पक्षति पक्षमूल' इत्यमर प्रसर्पति गच्छतीति प्रसर्पत तेषा सशब्द गच्छतामित्यर्थ। राज्ञ दशरथस्य सुत पुत्र तस्य रामचद्रस्य पत्त्राणि पक्षा सति येषा ते पत्त्रिण बाणा तेषा 'अत इनि ठनौ' इति इनि। 'पत्त्रीरोपइषुर्द्वयो' इत्यमर। प्रभजनेन वायुना 'पवमानप्रभजनौ' इत्यमर। प्रतिलोम विलोम 'अच्प्रत्यन्वपूर्वात्सामलोम्न' इत्यचप्रत्यय। आहरणक्रियाविशेषण चैतत्। आहृतै आनीतै निजैरेव आत्मीयैरेव 'स्वके नित्ये निज त्रिषु' इत्यमर। शरै बाणै दृढ यथास्यात्तथा निजघ्निरे ताडिता निपूर्वाद्धते कर्मणि लिट्। अनुप्रास॥ ३३॥

क्षतमिति। भुव बिभर्तीति पालयतीति भूभृत् सुप्युपपदे क्विप्चेति भृधातो क्विप्। तस्य दशरथस्य तनयस्य पुत्रस्य श्रीरामभद्रस्य पृषत्केण बाणेन 'पृषत्कबाणविशिखा' इत्यमर। क्षत प्रहृत पतत्रिणा पक्षिणा 'पतत्रिपक्षिपतगपतत्पत्त्ररथाण्डजा' इत्यमर। पथ मार्गात् आकाशादित्यर्थ। पततीति पतत् एतादृश तत्पूर्वोक्त बल राक्षससैन्य कर्म असव प्राणा अर्थात्सैन्यस्य 'पुसिभून्न्यसव प्राणा' इत्यमर। अशिवे अमगले पूर्वमृतराक्षसशवाधिष्ठितत्वात् अशुचिनीति यावत् तदुक्त निर्णयसिंधौ वृहद्विष्णु—'ग्राममध्यगतो यावत् शवस्तिष्ठति कस्यचित्। ग्रामस्य तावदाशौच निर्गते शुचितामियात्' इति। एतादृशे भुव पृथिव्या तले निपातस्य पतनस्य खेद दु ख तस्मात् भियेव भीत्यैव 'भीत्रा

शिताङ्कुशन्यासविधूतमस्तकाः शिरःसमीपे विनिविष्टबाहवः ।
ध्रुवं नदन्तो युधि तं प्रहारिणं भयादयाचन्त यथाऽरिदन्तिनः ॥ ३५
द्विपं करीरीयुगमूलखण्डितप्रशीर्णदन्तं समदेन पश्यता ।
मृधापनाद्व्यथितेन चेतसि क्षणं विचक्रे निकटेन दन्तिना ॥ ३६ ॥
करी करं यातमुदग्रविग्रहः परं प्रहर्तुं प्रतिहत्य रंहसा ।
शरेण भित्वा निखिले निकीलिते शशाक मोक्तुं न भुजस्य मण्डले ३७

---

र्थानां भयहेतुः' इत्यपादानत्वं अंतरा मध्ये तूर्णं सत्वरं 'सत्वरं चपलं तूर्णमविलंबित'इत्यमरः। जहुः तत्यजुः ओहाक् त्यागे लिट्। उत्प्रेक्षानुप्रासौ अलंकारौ ॥३४॥

शितेति । शिताः तीक्ष्णाः ये अङ्कुशाः सृणयः 'अंकुशोऽस्त्रीसृणिः स्त्रियां' इत्यमरः । तेषां ये न्यासाः आरोपणानि तैः विधूतानि कम्पितानि मस्तकानि यैः अतएव शिरःसमीपे शिरसां मस्तकानां समीपे समीपभागे विनिविष्टाः स्थिताः बाहवो येषां ते युधि समरे नदतः अव्यक्तशब्दं कुर्वंतः नदअव्यक्ते शब्दे लटः शत्रादेशः एतादृशाः अरिदंतिनः शत्रुहस्तिनः प्रहरति तच्छीलः प्रहारी सुप्यजातौ णिनिस्ताच्छील्ये इति णिनिः तं रामचन्द्रं भयात् ध्रुवं अयाचत यथा प्रार्थयत इवेत्यर्थः। यथा कश्चिद्दुर्बलः हस्तौ मस्तके परिधृत्वा शिरः कम्पयन् सन् प्रबलं शरणं याति तद्वत् हस्तिनः रामभद्रं शरणं ययुः किमित्युत्प्रेक्षा। उत्प्रेक्षानुप्रासावलङ्कारौ॥३५॥

द्विपमिति । करीरिणोः दंतमूलयोः युगं युग्मं 'करीरी चीरिकायां स्यात् दंतमूले च दंतिनां' इति मेदिनी । 'युगं युग्मे कृतादिषु' इत्यमरः । तेन यत् मूले मूलभागे खंडितं भेदः खडिभेदने अस्मात् नपुंसके भावे क्तः तेन प्रशीर्णौ दंतौ रदनौ यस्य एतादृशं द्विपं हस्तिनं 'द्विरदोऽनेकपो द्विपः' इत्यमरः। पश्यति अवलोकयति इति पश्यन् तेन मदेन दानेन सहितः समदः तेन अनेन गर्वितत्वं सूचितं एवं भूतेनापि मृधे युद्धे योऽपतारः आगमनमित्यर्थः । 'मृधमास्कंदनं संख्यं' इत्यमरः । तेन व्यथितेन पीडितेन पूर्वं समर्थत्वेपि समदनद्विपावलोकनात् युद्धप्राप्तिसंजातदुःखेनेत्यर्थः एतादृशेन निकटेन समीपस्थेन 'समीपे निकटासन्ने-' इत्यमरः ।' दंतिना हस्तिना चेतसि अन्तःकरणे क्षणं क्षणमात्रं क्रियाविशेषणमिदं विचक्रे विकृतमित्यर्थः । विकारो लब्ध इति यावत् । वेःशब्दकर्मणः इत्युतो वेरित्यनुवर्तमाने अकर्मकाच्चेति सूत्रेण वेः क्रियोऽकर्मकत्वप्रयुक्तात्मनेपदविधानेन छात्रा विकुर्वते इत्युदाहरणदानेन च विकारार्थकस्य क्रियोऽकर्मकत्वं स्पष्टमेव । अतएवात्र भावे लिट् । अनुप्रासः ॥ ३६ ॥

करीति । उदग्रः उच्चः विग्रहः देहो यस्य 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुंगे च वामने ।' 'शरीरं वर्ष्मविग्रहः' इत्युभयत्राप्यमरः । एतादृशः करी हस्ती रंहसा वेगेन 'रंहस्तरसी तु रयः स्यदः' परं शत्रुं प्रहर्तुं प्रतिहत्य समाहत्य यातं गतं करं शुंडां शरेण बाणेन अर्थात् रामेण भित्वा निखिले संपूर्णे भुजस्य मण्डले

निकीलिते रामशरेण वेगिना दृढ विभिद्योरुयुग तुरङ्गमे ।
कृतेऽपि दोषे भयमूढवृत्तिना हयेन कश्चिद्विचचाल नासनात् ॥ ३८॥
रिपोरपूर्णेन्दुमुखेन कश्चन स्थिरासन पत्रियुगेन राक्षस ।
निकृत्तयोरप्यधिजानु पादयो पपात वेगेन यतो न वाजिन ॥ ३९
वधाय धावन्नभिशत्रु विद्विप शरेण कृत्तच्युतमस्तकोऽपर ।
हतायुरप्यादिकृतेन कानिचित्पदानि वेगेन जगाम राक्षस ॥ ४० ॥
जवेन कश्चिज्जवनाम्बुदोपम क्षण सिताभ्रै कृतकर्णचामरम् ।
निपत्य कुम्भे तरसा द्विधा गतैर्विहायसा वाहयति स्म दन्तिनम् ॥४१॥

---

चक्रवाले निकीलिते खिलीकृते राति माक्तु न शशाक समर्थो नाभूदित्यर्थ । माक्तुमित्यत्र शकधृषज्ञेत्यादिना तुमुन् । अनुप्रास ॥ ३७ ॥

निकीलित इति । कश्चिघास्ता वेग रह अस्यास्तीति तथा एतादृशेन रामस्य रामभद्रस्य बाण तेन ऊरुयुग सक्थ्नो युगल दृढ यथास्यात्तथा विभिद्य निकीलिते सयते 'बद्धे कीलितसयते' इत्यमर । एतादृशे कुरङ्गमे मृगे दोषे निकीलितदोषे कृतेऽपि आचरितेऽपि भयेन भीत्या मूढा विवेकरहिता वृत्ति यस्य एतादृशेन हयेन अश्वेन आसनात् न विचचाल । मृगवत् स्वस्यापि कीलितत्व जातमिति भ्रान्त्या न चचालेत्यर्थ । अनुप्रासालकार ॥ ३८ ॥

रिपोरिति । कश्चन स्थिर दृढ आसन यस्य स स्थिरासन । एतादृश राक्षस रिपो शत्रो अपूर्ण अर्ध इत्यर्थ एतादृशो य इन्दु चन्द्रमा तद्वत् मुख यस्य एतादृशेन अर्धचन्द्राकारेणेत्यर्थ । एतादृशेन पत्रिणो बाणायो युग युग्म तेन जानुनोरित्यधिजानु 'विभक्त्यर्थेऽव्ययीभाव ।' पादयो निकृत्तयोरपि छिन्नयोरपि वेगेन एतीति यन् तस्मात् यत गच्छत इण्धातो शतरत्येद रूप एतादृशात् वाजिन अश्वात् न पपात । पत्लृ गतौ लिट् ॥ ३९ ॥

वधायेति । शत्रो समुख अभिशत्रु 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यनेन अव्ययीभाव । शत्रो समुपामिति यावत् वधाय नाशाय तादर्थ्येचतुर्थी । धावतीति धावन् गच्छन्नित्यर्थ । तावत् विद्विप शत्रो रामभद्रस्येत्यर्थ । शरेण बाणेन आदौ कृत्त छिन्न पश्चात् च्युत गलित कृत्तच्युत 'पूर्वकालैकेति समास ।' एतादृश मस्तक उत्तमाग यस्य अतएव हत अपहृत आयुर्यस्य एतादृशोऽपि अपर अन्य राक्षस आदौ छेदनात्पूर्व कृत आदिकृत तेन वेगेन जवेन कानिचित्पदानि जगाम । मस्तक छिन्नेऽपि पूर्ववेगानुवृत्त्या कानिचित् पदानि जगामेति यावत् ॥ ४० ॥

जवेनेति । कश्चिद्राक्षस जवन तरस्वी 'तरस्वी त्वरितो वेगी प्रजवी जवनो जव ' 'जुचक्रम्येति युच्' एतादृश य अम्बुद मेघ स उपमा यस्य । कुम्भे गडस्थले निपत्य पतित्वा तरसा वेगन हस्तिन सिताभ्राणां या द्विधा द्विप्रकारेण 'अधिकरणविचाले चेति धाप्रत्यय ' गतै सितानि शुभ्राणि यानि अभ्राणि मेघा

पृषत्कभिन्नोदररन्ध्रनिर्गतं स्वमन्त्रमुत्कृत्य खुराग्रपातनैः ।
दिशि क्षिपन्तं युधि वेगधारयापरो भुवं वाहयति स्म वाजिनम् ॥४२॥
निकृत्य सौमित्ररथाङ्गधारयाऽपवर्णितं स्वं तरसा क्षपाचरः ।
क्रुधायुधीकृत्य भुजं महीभुजः सुतं जघान ध्वनिकम्पितस्थलः ॥४३॥
न्यमज्जदर्धेन रथाङ्गमीरितं परेण शत्रोरुपदण्डमस्तकम् ।
तमेव दण्डं परशुं विधाय तं शिरस्यरातिर्निजघान सस्वनः ॥४४॥

---

'अभ्र मेघो वारिवाह' इत्यमर । तै करणे कृते कर्णयोश्चामरे प्रकीर्णके यस्य 'चामर तु प्रकीर्णकम्' इत्यमर । कुम्भभिन्नस्थिताभ्राणि यस्य कर्णयो चाम रवत् प्रतिभास एतादृश दन्तिन हस्तिन विहायसा आकाशमार्गेण 'पुस्याकाशवि- हायसी' इत्यमर । वाहयति स्म प्रापयति स्मेत्यर्थ । लट् स्मे इति स्मयोगे लट् अनुप्रासालकार ॥ ४१ ॥

पृषत्केति । युधि युद्धे अपर राक्षस पृषत्कै बाणै 'पृषत्कबाणविशिखा' इत्यमर' । भिन्न विदीर्ण यदुदर तस्य यद्रन्ध्र छिद्र तस्मान्निर्गत बहिर्गत एता दृश स्व निज 'स्वो ज्ञातावात्मनि स्व त्रिष्वात्मीये स्व स्त्रिया धने' अन्त्र पुरीतत् उत्कृत्य खुराणा अग्राणि अग्रभागा तेषा यानि पातनानि तै कृत्वा दिशि हरिति 'दिशस्तु ककुभ काष्ठा आशाश्च हरितश्च ता' इत्यमर । क्षिपति प्रेर- यति इति क्षिपन् त वाजिन घोटक 'वाजिवाहार्वगन्धर्व' इत्यमर । भुव पृथिवीं वाहयति स्म प्रापयति स्म । अत्र गतिबुद्धीति सूत्रेण अणि कर्तु णौ कर्मत्व ॥४२

निकृत्येति । ध्वनिना शब्देन कम्पित चलित स्थल येन एतादृश क्षपाचर राक्षस, क्षपायां रात्र्यां चरतीति तथा 'त्रियामा क्षणदा क्षपेत्यमर ।' चरेष्ट इति टप्रत्यय । सुमित्राया अपत्य पुमान् सौमित्र लक्ष्मण स्त्रीभ्योढगिति ढकं बा- धित्वा 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यण्प्रत्यय । तस्य यत् रथाङ्ग चक्र 'चक्र रथाङ्ग' इत्यमर । तस्य धारया निकृत्य कृतीछेदने इत्यस्य निपूर्वस्य ल्यबन्तस्य रूपं । अपवर्जित त्यक्त । अपवर्णितमिति पाठोऽसाधुरिति भाति लेखकप्रमादो वा स इति ज्ञेय । स्वमात्मीयं भुज तरसा वेगेन क्रुधा क्रोधेन क्रुध्यते संपदादित्वात् भावे क्विप् आयुधीकृत्य प्रहरणीकृत्य 'आयुध तु प्रहरणं' इत्यमर । आयुध- शब्दाच्च्विप्रत्यये च्व्यन्तत्वादूर्यादित्यनेन गतिसंज्ञायां कुगतीत्यनेन गतिसमासे ल्यबादेश मही पृथ्वी भुङ्क्ते इति महीभुक् दशरथ तस्य सुत पुत्र लक्ष्मण जघान प्रजहारेत्यर्थ । लक्ष्मणबाणेन छिन्नं स्वभुजमेव आयुधत्वेन प्रजहारेत्यर्थ । अनुप्रासालंकार ॥ ४३ ॥

न्यमज्जेति । परेण शत्रुणा ईरित प्रेरित रथाङ्ग चक्र शत्रो उपदण्डमस्तक 'दण्डस्य मस्तकं शिर' तस्य समीप इति तथा 'अव्यय विभक्ती' त्यादिना सामीप्येऽव्ययीभाव दण्डाग्रे इत्यर्थ । अर्धेन अर्धभागेन शत्रुणा अर्धस्य खण्डित त्वात् अपरिशिष्टार्धेनेत्यर्थं । न्यमज्जत् प्रविवेशेति यावत् । अराति शत्रु स्वनेन

स्वपाणियन्त्रच्युतशस्त्रसादितं विधाय वृन्दं बहुधा सुरद्विषाम् ।
रणाय कोशादसिमीशितुः सुतश्चकर्ष कृष्णं विवरादिवोरगम् ॥४५॥
परस्य सौमित्रिकृपाणपाटितद्विधाभवद्देहभृतो निकीलयन् ।
शरेण पार्श्वे नृहरिः समग्रतां व्यधत्त रोषेण नु लीलया नु सः ॥ ४६॥
करं रणाय प्रतिहृत्य धावति द्विपे निजघ्ने तनयेन भूभुजः ।
बहूनि खण्डानि विधित्सुनाऽसिना समेत्य सम्पिण्डित एव तत्करः

सहित तथा सशब्द सन् इत्यर्थः । तत्पूर्वोक्तमेव दण्ड परशु परश्वध 'परशुश्च परश्वध' इत्यमरः । विधाय कृत्वा स पूर्वोक्त शत्रु शिरसि शिरोवच्छेदेन निजघान ताडयामास । अयं भाव एकेन शत्रुणा तावत् चक्र प्रहृत । अपरेण सत् प्रहृत । अतस्तस्यार्धे यस्मिन् तत् प्रहृत तस्य दण्डे पतित अत स परशु रापन्न । चकार्धे दण्डस्य शिरसि सलग्न चेत् परश्वधाकारो भवति । अत । स तमेव परशु गृहीत्वा प्रहर्तारि निजघानेत्यर्थ ॥ ४४ ॥

स्वपाणीति । ईशितु ईश्वरस्य ईशऐश्वर्ये अस्मात् ताच्छील्ये तृन्प्रत्यय । दशरथस्य पुत्र रामो वा लक्ष्मणो वा सुरान् द्विषतीति सुरद्विष 'सत्सूद्विषेति क्विप्' तेषां दैत्यानां वृन्द समूह 'स्त्रिया तु संहति वृन्द' इत्यमर ।बहुधा बहुप्रकारेण 'सख्याया विधार्थे धा' इति धाप्रत्यय । स्वस्य च पाणि हस्त तदेव यन्त्र तस्मात् च्युतानि गलितानि 'स्कन्न पन्न च्युत गलित' इत्यमर । यानि शस्त्राणि आयुधानि तै सादित नाशित विधाय कृत्वा रणाय युद्धाय तादर्थ्ये चतुर्थी । विवरात् बिलात् विवर बिल इत्यमर । कृष्ण कृष्णवर्णं उरग उरसा गच्छतीति उरग स 'उरसो लोपश्चेति' उर शब्दे उपपदे गमधातो ड प्रत्यय इव सर्पमिवेत्यर्थ । कोशात् खड्गपिधानात् 'कोशोऽस्त्री कुड्मले खड्गपिधाने' इत्यमर । असिं खड्ग चकर्ष उज्जहारेत्यर्थ । उपमानुप्रासावलङ्कारौ ॥ ४५ ॥

परस्येति । सुमित्राया अपत्य पुमान् सौमित्रि लक्ष्मण 'स्त्रीभ्यो ढक्' इति ढक् बाधित्वा बाह्वादित्वादिञ् । तस्य च कृपाण खड्ग 'करवाल कृपाणवत्' इत्यमर । तेन पाटित विदीर्ण अतएव द्विधाभवन् शकलीभवन् यो देह काय त बिभर्तीति देहभृत् तस्य परस्य शत्रो इद समग्रतामित्यनेन अन्वेति । पार्श्वे पार्श्वभागे शरेण बाणेन निकीलयतीति निकीलयन् सदधत् स पूर्वोक्त नृहरि ना मनुष्य हरिरिव सिंह इव नृहरि 'उपमित व्याघ्रादिभिरिति' समास । रोषेण नु क्रोधेन नु लीलया नु हेलया नु समग्रस्य सपूर्णस्य भाव समग्रता ता व्यधत्त अकुरुत विपूर्वाद्धधातेर्लङ् शप् श्लु द्वित्व । अत्र नुद्वय उत्प्रेक्षाद्वयसूचनार्थं । उत्प्रेक्षालङ्कार ॥ ४६ ॥

करमिति । रणाय युद्धाय कर शुण्डां प्रतिहृत्य विस्तीर्येत्यर्थ । उर्ध्वीकृत्वेति वा धावति अतिवेगेन गच्छति द्विपे हस्तिनि भूभुज दशरथस्य तनयेन पुत्रेण निजघ्ने प्रहृतमित्यर्थ । अविवक्षितकर्मत्वेन अकर्मकत्वात् भावे लिट् । तदुक्त

ततस्ततासृक्स्रवलोहिताम्बरः श्रियं जयस्थामुपयन्तुमुद्यतः
यथेप्सपानाशनतृप्तचेतसश्चकार राजन्यवरश्चिरं द्विजान्॥ ५१ ॥
ततो मरुत्पावकशस्त्रनिर्धुतप्रदग्धमारीचसुबाहुविग्रहः ।
बलं बलीयानवलीकृतं भिया ततं दिगन्तं स निनाय नायकः ॥५२॥
रणे दधानो हृदयं दयाहृतं सलीलमायम्य धनुर्धनुर्धरः ।
पराङ्मुखानां शनकैः शिलीमुखान् द्विषद्द्विपानां जघने जघान सः

पूर्वपदस्य सुपः सुर्वक्तव्य' इति । समुच्छ्वसन् ऋद्धिं प्राप्नुवन् यः प्रहारवातः प्रहारसवधी वात. वायु तेन विशोषिताः शुष्कीकृता· आसन्निति शेष· ॥ ५० ॥

तत इति । तत युद्धप्रवृत्त्यनतर तत विस्तृत यत् असृक् तस्य य. स्रवः स्रुतिरित्यर्थ । ऋदोरप् इति स्रुधातोर्भावे अप्प्रत्ययः । तेन लोहित रक्त 'लोहितो रोहितो रक्त' इत्यमरः । अम्बर वस्त्र यस्य एतादृश । जये विजये तिष्ठति इति जयस्था तां शत्रुजयप्राप्तामित्यर्थ । सुपीति योगविभागात् स्थाधातोः कप्रत्यय एतादृशीं श्रिय लक्ष्मीं जयलक्ष्मीमिति यावत् उपयन्तु उद्वोढु उद्यतः प्रवृत्तः राजन्यवरः । राजन्येषु क्षत्रियेषु वरः श्रेष्ठ· सुप्सुपेति समासः । रामचन्द्रः लक्ष्मणो वा 'मूर्धाभिषिक्तो राजन्य' इत्यमरः । चिर चिरकाल द्विजान् ब्राह्मणान् पक्षिणश्च 'दन्तविप्राण्डजा द्विजा' इत्यमरः । नन ब्राह्मणानां जन्मना सावित्र्युपदेशेन च द्विजातत्वात् द्विजत्व 'जन्मना जायते शूद्रः सस्काराद्द्विजउच्यते' इत्युक्ते· । पक्षिणा द्विजत्व तु अण्डरूपेण स्वरूपेण च । तान् ईप्सा इच्छां अनतिक्रम्य वर्तते इति यथेप्स । आप्नोते सनतात् अप्रत्यय· द्वित्वे ईत्वे अभ्यासलोपः पदार्थानतिवृत्तौ अव्ययीभाव । यथेप्स ये पानाशने प्राशनभक्षणे पानकपक्वान्नानां रक्तमांसाना च यथायोग्य ज्ञेय । ताभ्यां तृप्त चेतः अतःकरण येषा ते एतादृशान् चकार । यथा विवाहादौ यथेच्छपानाशनादिभि ब्राह्मणाः तर्प्यंते एव जयश्रीविवाहेपि मांसादिभि. तेन पक्षिणः तर्पिता इत्यर्थः । श्लेषानुप्रासावलङ्कारौ ॥ ५१ ॥

तत इति । ततः जयश्रीप्राप्त्यनतर मरुत् वायु· पावक. अग्नि तयो· द्वन्द्वे वाय्वग्न्यस्त्रे इत्यर्थ. । ताभ्या पूर्वं निर्धुतौ कंपितौ पश्चात् प्रदग्धौ पूर्वकालैकेति समासः । निर्धुतप्रदग्धौ मारीचसुबाह्वोः एतन्नामकयो दैत्यविशेषयोः विग्रहौ देहौ येन यद्यप्यत्र सुबाहु मारीचेति भवितव्य द्वन्द्वेघीति सूत्रात् तथापि 'समुद्राभ्राद्घः' इति निर्देशेन पूर्वनिपातप्रकरणस्यानित्यत्वात् समाधेय । बलीयान् अतिशयेन बलवान् इति तथा विन्मतोर्लुगिति ईयसुनि मतुपो लुक् एतादृश· सः पूर्वोक्तः नायक रामचन्द्र तत विस्तृत भिया भीत्या अवलीकृतं अवलेव क्षीवत् कृत अवलाशब्दात् च्विप्रत्यय· अस्य च्वावितीत्व अवलीकृतमित्यत्र कुगतीति समासः । बल सैन्य दिगत दिशां अतः निनाय प्रापयामास । अकथित चेत्येनेन द्विकर्मकत्व अनुप्रासालङ्कारः ॥ ५२ ॥

रण इति । रणे युद्धे दयाहृत दयाहृता येन दयार्द्रमित्यर्थः । पूर्वनिपातप्रकरण·

भृशं न सेहे युधि राममाशुगप्रतानशुष्काशनिपातभीषणम् ।
युगान्ततिग्मद्युतितेजसं द्विषो बलीयसो भ्रातृबलान्वितं बलम् ॥ ५४

स्थित्वा गुणे महति तत्क्षणलब्धमोक्षाः
सुश्लिष्टयुक्तिसफलाननसम्पदस्ते ।
शाक्या इवास्य विशिखा रिपुसैनिकेभ्य
श्चक्रुस्त्रिविष्टपसमागमनोपदेशम् ॥ ५५ ॥

---

स्यानित्यत्वात् निष्ठेति पूर्वनिपातो न भवति । अथवा दयया आहृत आकृष्ट तृतीयासमासो वा एतादृश हृदय अन्तःकरण 'चित्त तु चेतो हृदय' इत्यमर । धत्तेऽसौ दधान एतादृश धरतीति धर पचाद्यच् धनुष धर धनुर्धर स राम धनु चाप लीलया सहित सलील यथास्यात्तथा आयम्य आकृष्य पराङ्मुखाना विमुखानां द्विषतां शत्रूणा ये द्विपा तेषां जघने कटिपूर्वभागे शिलीमुखान् बाणान् 'अलिबाणौ शिलीमुखौ' इत्यमर । शनकै मन्द यथास्यात्तथा शनै शब्दस्याकच् जघान प्रजहार हन्तेर्लिट् । अनुप्रास ॥ ५३ ॥

भृशमिति । बलीयस अतिबलयुक्तस्य द्विष शत्रो बल सैन्य कर्तृ युधि युद्धे आशुगाना बाणाना 'अजिह्मगखगाशुगा' इत्यमर । तेषां प्रतान विस्तार प्रपूर्वात्तनोतेर्भावे घञ् स एव शुष्काशनिपात जलरहितवज्रपात अशनिपातेहि प्राय जल अनुवर्तते प्रकृतबाणेषु जलासम्भवात् शुष्केति विशेषण । तेन भीषण भयकर अतएव युगान्ते प्रलयान्ते तिग्मद्युति तीक्ष्णकान्ति सूर्य इत्यर्थ । तद्वत् तेजो यस्य भ्रातृबलान्वित भ्राता लक्ष्मण तस्य यत् बल सामर्थ्यं तेन अन्वित अनुकूलितमित्यर्थ । एतादृश राम भृश अत्यन्त न सेहे न मम्रषे इत्यर्थ । सह-धातोर्लिट् एत्वाभ्यासलोपौ अनुप्रास ॥ ५४ ॥

सर्गान्ते भिन्नवृत्तेन वर्णयति स्थित्वेति । महति उत्कृष्टे गुणे सत्त्वशौर्यादिके स्थित्वा तत्क्षणे गुणस्थितिक्षणे लब्ध प्राप्त मोक्ष निर्वाण यै 'श्रेयो नि-श्रेयसामृते मोक्षो' इत्यमर । सुश्लिष्टा सुन्दरा विद्यमाना युक्तय योगा गु भकर्मप्रयोगा वा ते सफल्य आननानां मुखानां सम्पदो येषां एतादृशा उत्तम युक्तिवर्णनेन उत्तम योग वर्णनेन वा सफल मुखा इत्यर्थ । एतादृशा शाक्या बुद्धविशेषा इव अस्य रामभद्रस्य महति विशाले 'विशाल पृथुल महत्' इत्यमर गुणे मौर्व्यां 'रज्जुस्त्रिषु शिञ्जा गुण' इत्यमर । स्थित्वा तत्क्षणे धनुर्गुणस्थितिक्षणे लब्ध प्राप्त मोक्ष धनुर्विभागो यै एतादृशा सुश्लिष्टा युक्ति आननसम्पद् अग्रभागसम्पदो येषां सुश्लिष्टाग्रभागसम्पद इत्यर्थ । ते पूर्वोक्ता विशिखा बाणा रिपो सैनिका सेनागमनेता योद्धा 'सेनायां समवेता' इति ठञ् तेभ्य तृतीयं विष्टप त्रिविष्टप अत्र वृत्तौ त्रिशब्द पूरणप्रत्ययान्त 'त्रिदश करणीये त्रिविष्टप' इति कोश । त्रिविष्टपं स्वर्ग तस्य या समा शुभमार्गा तस्यां गमनस्य यानस्य उपदेश चक्रु विदधु । युद्धमरणेन स्वर्गप्राप्तिरित्यर्थ । श्लेषानुप्राणितोऽत्रोपमाल-

हुतभुजि निधनाख्ये शत्रुहव्यानि हुत्वा
परिणयति जयश्रीवीरकन्यां नृवीरे ।
समरपटहघोषे तत्र नृत्तं कबन्धै-
र्बहलरुधिरपङ्कस्फारिसिन्दूरलेपैः ॥ ५६ ॥

मध्ये निकृत्तरजनीचरपूर्वकायाः
श्छेदे- स्थिता भुवि निपत्य भयं वितेनुः ।
रक्षःसु युद्धविमुखेषु विभिद्य भूमीं
मर्द्धोत्थिता इव पुनः समराय दैत्याः ॥ ५७ ॥

---

कार । वसततिलका वृत्तम् 'ज्ञेय वसततिलक तभजा जगौ ग ' इति लक्षणात् ॥ ५५ ॥

हुतभुजीति । नृषु वीर तस्मिन् रामभद्रे निधन मरण आख्या यस्य 'मरण निधनोऽस्त्रियाम्' 'आख्याह्वे अभिधान चेत्यमरः'। हुतभुजि अग्नौ 'हिरण्यरेता हुतभुग्' इत्यमर । दानव रिपव एव हव्यानि हविर्द्रव्याणि तानि हुत्वा जय-श्रीरेव वीरकन्या तां परिणयति उद्वहति सति समरस्य युद्धस्य य पटह वाद्य तस्य यो घोष ध्वनि तस्मिन् अत्र घोषे इति पाठ प्रामादिक इति भाति । तत्र रणभूमौ बहल घ रुधिरपक रक्तकर्दम तेन स्फारिण स्फुरद्रूपा स्फुर स्फुरणे णिजन्तात्सुप्यजातौणिनिति णिनि 'चिस्फुरोर्णौ' इति आत्व सिंदूरलेपा येषां तै कबन्धै मूर्धविरहितक्रियायुक्तशरीरै कर्तृभि 'कबन्धोऽस्त्री क्रियायुक्त' इत्यमर । नृत्त नर्तन कृतमित्यर्थ । नृत्तीगात्रविक्षेपे भावे क्त विवाहे हि वरेण अग्नौ हविर्हुत्वा कन्या उद्ह्यते नृत्यतंपाश्च अनेकयेपगुणाश्च वाद्यघोषानुरोधेन नृत्यं तीति सार्वजनीनमेवैतत् । रूपकालङ्कार । मालिनीवृत्त उक्त च 'ननमयययुतेय मालिनी भोगिलोकै ' इति ॥ ५६ ॥

मध्ये इति । मध्ये मध्यभागे छेदे भुवि भूतले निपत्य पतित्वा स्थिता निकृत्तानां छिन्नानां रजनीचराणां राक्षसानां च पूर्वकाया कायानां देहानां पूर्वाणि पूर्वकायाः कर्मार 'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे' इति समास । रक्षःसु राक्षसेषु युद्धस्य रणस्य विमुखा पराङ्मुखा तेषु युद्धपराङ्मुखेषु सत्स्वित्यर्थ । भूमिं पृथ्वीं भूमीमिति पाठे 'कृदिकारादक्ति न' इति ङीष् । पुन समराय युद्धाय अर्धोत्थिता अर्धं यथास्यात्तथा उत्थिता सुप्सुपेति समास । दैत्ये अपत्यानि पुमांसः दैत्याः 'दित्यदित्यादित्यपत्यु' दिति दान्दार् ण्यप्रत्यय । असुरा इव भय भीति 'भितिर्भी साध्वस भय' इत्यमर । वितेनु विस्तारया-मासु । तनु विस्तारे लिट् । दैत्यानां रसातलनिवासित्वात् उत्प्रेक्षेय । तदुक्त श्रीमद्भागवते 'ततोऽपरस्तादतले दैतेया दानवा पण्यो नाम निवातकवचा कालेया हिरण्यपुरवासिन इति त्रिपुरवासिनोत्स्या उत्पत्त्या महौजसो महासाहसिनो भगवत सकललोकमहानुभावस्य हरेरेव तेजसा प्रतिहताबलाः बिलेशया एव निवसन्ति' इत्यादि । उत्प्रेक्षालङ्कार । वसन्ततिलकावृत्त स्पष्ट पूर्वं ॥ ५७ ॥

रामायुधव्यथितराक्षसरक्तधारा-
स्पर्शेन लोहितरुचो मुहुरम्बुवाहा ।
गौरीपतिप्रणतिसम्भ्रमलाभवन्ध्या
सन्ध्यामकालघटितां गगने वितेनु ॥ ५८ ॥

सङ्क्रीडद्रथतुरगद्विपाभ्रवृन्द
व्युत्क्रान्तौ विरतपृषत्कपातवृष्टि ।
निस्त्रिंशस्फुरिततडिद्वियुक्तमाप
व्यस्तार्कद्युति शरदीव तन्नभ श्री ॥ ५९ ॥

रक्षोवसापिशितपूरितकुक्षिरन्ध्र
काकुत्स्थबाणहतहस्तिमुराधिरूढ ।
पर्यन्तलग्नरुधिराणि मृदुप्रणादं
स्तुण्डानि वायसगणो रदने ममार्ज ॥ ६० ॥

---

रामेति । रामस्य रामभद्रस्य यानि आयुधानि प्रहरणानि 'आयुध तु प्रहरण' इत्यमर । तै व्यथिता भीता ताडिता इति यावत् एतादृशा ये राक्षसा तेषां रक्तस्य या धारा प्रवाह तस्या स्पर्शन सबधेन लोहिता आरक्ता रुक् कांति येषा 'स्यु प्रभारुग्रुचिस्त्विड्भा' इत्यमर । एतादृशा अम्बूनि उदकानि वाहयन्तीति अम्बुवाहा मेघा अम्बुशब्दे उपपदे वाहे कर्मण्यण् 'अभ्र मेघो वारि वाह' इति कोश । गगने आकाशे मुहु पुन पुन यदा यदा रक्षोरक्त सबधो भवति तदातदेत्यर्थ गौर्या पार्वत्या पति स्वामी शकर तस्य या प्रणति नमस्कार तत्सबधी य सभ्रम त्वरा 'आरंभ सभ्रमस्त्वरेति' कोश तस्य यो लाभ प्राप्ति तेन वध्या रहितामित्यर्थ । एतादृशीं अकालघटितां अ काले घटिता निर्मिता इति तथा सध्यां पितृप्रसू 'सायंसध्या पितृप्रसू' रित्यमर । वितेनु विस्तारयामासु । अतिशयोक्त्यलकार । वसततिलकावृत्तम् ॥ ५८ ॥

सक्रीडतीति । रथतुरगद्विपं रथा स्यदना तुरगा अश्वा द्विपा हस्तिन एतेषां समाहार । रथतुरगद्विप सेनांगत्वात् 'द्वद्वश्च प्राणितूर्यसेनांगानामित्येकवद्भाव' सक्रीडत् विहरत् यत् रथतुरगद्विप तदेव अभ्रवृद मेघसमूह तस्य व्युत्क्रांतौ अपसृतौ गतौ विरतौ सत्यामिति यावत् विरता शांता पृषत्कानां बाणानां विंदूनां च पात पतन स एव वृष्टि वर्षण यस्मिन् निर्गत त्रिंशद्भ्य अंगुलिभ्य इति निस्त्रिंश खड्ग खड्गवाचकस्तत्पुरुषस्य वाच्य इत्यनेन स्वचणभावान । तस्य स्फुरित स्फुरण तदेव तडित् विद्युत् तथा वियुक्त विरहितं अतएव मध्ये व्यव धानाभावात् व्यस्ता स्पष्टा अर्कस्य सूर्यस्य काति यस्मिन् एतादृशं तत्पूर्वोक्त नभ कर्मं शरदीव शरत्काले इव श्री शोभा कर्त्री आप प्राप । उपमानुप्रासावलं-कारौ । प्रहर्षिणी वृत्तम् । उक्त च 'म्नौज्रौगस्त्रिदशयति प्रहर्षिणीय' इति ॥ ५९ ॥

रक्ष इति । रक्षसां राक्षसानां वसा हृन्मेद पिशित मांस च ताभ्यां

राजात्मजौ मुनिसुताश्रुभिराहितार्घ्यौ
प्रत्युद्गतौ मृगकुलैरुटजानि गत्वा ।
आवर्जिते विदधतु शिरसी सुबाह्वो
र्बाणव्रजेन गुरुणी गुरुपादमूले ॥ ६१ ॥

इति कुमारदासस्य कृतौ जानकीहरणे महाकाव्ये
मारीचसुबाहुवधो नाम पञ्चम सर्ग ॥

---

पूरित पूर्ण कुक्षे उदरस्य रन्ध्र बिल यस्य ककुत्स्थस्य राजविशेषस्य गोत्रापत्य पुमान् काकुत्स्थ राम शिवादित्वादण् तस्य ये बाणा शरा तै हता नाशिता ये हस्तिन दन्तिन तेषा मुखेषु अधिरूढ आरूढ मृदु मृदुल प्रणाद ध्वनि यस्य आकण्ठ उदरपूर्तै आक्रोशे शक्त्यभावात् मृदुप्रणादश्च । एतादृश वायसाना काकाना गण समूह पर्यन्ते प्रान्तभागे लग्नानि सलग्नानि रक्तानि येषा एतादृशानि तुण्डानि मुखानि चचूरित्यर्थं । रदने हस्तिदन्ते ममार्ज शोधयति 'मृजू शुद्धौ' लिट् । अत्र काकजाते स्वभाववर्णनात् स्वभावोक्त्यलकार । तदुक्त 'स्वभावोक्ति स्वभावस्य जात्यादिस्थस्य वर्णनमिति' अनेन रक्षसा वसामांसरक्तादीना समर्दो वर्णित तेन च बहूनां राक्षसाना हनन ध्वनित । वसततिलका ॥ ६० ॥

राजात्मजाविति । मुनीना सुता पुत्रा तेषा अश्रूणि तै आहितार्घ्यौ अर्घाय पूजाविधये इद अर्घ्यं 'मूल्ये पूजाविधावर्घ' इत्यमर । आहित कृत अर्घ्यं याभ्या तौ तथोक्तौ ऋषिकुमारै तयोर्दर्शनानन्देन प्रेमाश्रूणि पातितानि तानि अर्घ्यत्वेन कल्प्यते मुनिसुताक्षिभि इति पाठे तु अक्ष्णा तेजोरूपत्वेन अक्षिरूपव रक्षितदर्शनात् आर्तिक्यत्वेन पूजा ज्ञेया । मृगाना हरिणानां कुलानि समूहा तै प्रत्युद्गतौ राज्ञ दशरथस्य आत्मजौ पुत्रौ रामलक्ष्मणौ उटजानि पर्णशाला 'पर्णशालोटजोऽस्त्रियां' इत्यमर । सुबाह्वो मारीचस्य सुबाहोश्चेत्यर्थं । सुबाहुरिति यदृच्छा शब्देन यौगिकसुबाहुशब्दस्यैकशेषात् द्विवचन यद्वा प्रथमयो पूर्वसवर्णयोरित्यत्र यथा प्रथमासहचरितद्वितीयायाग्रहण तद्वत् सुबाह्वोरिति द्विवचनसामर्थ्यात् सुबाहुसहचरितस्य मारीचस्यापि ग्रहण बाणव्रजेन बाणसमूहेन आवर्जिते अपहृते कृते इत्यर्थं । गुरुणी गुरुत्ववती शिरसी मस्तके गुरो विश्वामित्रस्य पादमूले चरणसमीपे विदधतु स्थापयामासतुरित्यर्थं । विपूर्वाद्धाते लिट् अतुस् । वसततिलकावृत्तम् ॥ ६१ ॥

इतिश्रीयुतपदवाक्यप्रमाणपारावारीणमहामहोपाध्यायपदव्यल
कृतपण्डितप्रकाण्डश्रीकरहाटकरोपनामकश्रीमद्गोपालाचार्या
न्तेवासिना निगुडकरो पाभिधेन नारायणशर्मणा
विरचितायां महोत्साहाख्यजानकीहरण
काव्यटीकायां पञ्चम सर्ग समाप्त ॥

॥ श्रीकृष्णार्पणमस्तु ॥

# जानकीहरणम् ।

## षष्ठः सर्गः ।

उच्चचाल ततः स्रष्टा जगदंशस्य मैथिलम् ।
अनुग्रहीतुमग्रण्यं गृहिणामाहितक्रतुम् ॥ १ ॥
बिभ्रत् सन्ध्याविधिस्नानसंवर्द्धितरुचो जटाः ।
ज्वाला इव तपोवह्नेः शालिशूकाग्रपिङ्गलाः ॥ २ ॥

श्रीगणेशाय नमः ॥ श्रीकृष्णाय नमः ॥ पूर्वसर्गान्ते रामलक्ष्मणाभ्यां मारीचसुबाहुवधेन विश्वामित्रस्य तोष उक्तः, इदानीं विश्वामित्रकृततत्प्रत्युपकारभूतमिव तयोर्विवाहं विवक्षुः कविः रामलक्ष्मणाभ्यां सहितस्य विश्वामित्रस्य मिथिलायां गमनमुपक्रमते—उच्चचालेत्यादिना । चतुर्णां श्लोकानामेकान्वयादिदं कलापकं । उक्तं च "द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकं । कलापकं चतुर्भिः स्यात्तदूर्ध्वं कुलकं स्मृतं " इति । अनेन कलापकेन विश्वामित्रं वर्णयति । ततः सुबाहुमारीचवधानन्तरं पचम्यतात्सप्तम्यर्थात् पचम्यास्तसिलित्यनेन तसिल् । जगतः विष्टपस्य अंशस्य भागस्य स्रष्टा उत्पादकः सृजधातोस्तृच् प्रत्ययः । 'सृजन् दक्षिणमार्गस्थान् सप्तर्षीनपरान् पुनः । नक्षत्रवंशमपरमसृजत्क्रोधमूर्च्छितः । दैवतान्यपि स क्रोधात् स्रष्टुं समुपचक्रमे ' इत्यादि रामायणे बालकाण्डे त्रिशङ्कोराख्याने स्पष्टं । गृहिणां गृहं स्त्री ' गृहं गृहाश्च पुम्भूम्नि कलत्रेऽपि च सद्मनि ' इति मेदिनीकोशात् । अत्र तु तदुपजीव्यत्वात् उपचारात् गृहपदेन गृहस्थाश्रमो गृह्यते । सः अस्ति एषां ते गृहिणः । अथवा गृहाः दाराः सन्ति एषां इति गृहिणः 'अत इनि ठनौ ' इति इनि प्रत्ययः । 'ब्रह्मचारी गृही वानप्रस्थो' इत्यमरः । तेषां अग्रे नयति गच्छति इति अग्रणीः । अत्र नीधातुर्निवृत्तप्रेरणः 'सत्सूत्यादिना नयतेः क्विप्' 'अग्रग्रामाभ्यां नयतेर्णो वाच्यः ' इत्यनेन नयतेर्णत्वं । तं अग्रण्यं । आहिताः कृताः इत्यर्थः क्रतवः मखाः येन एतादृशं मैथिलं मिथिलायाः अधिपतिः मैथिलः तं जनकं अनुग्रहीतुं अनुग्रहं कर्तुं उच्चचाल प्रतस्थे इत्यर्थः ॥ अत्र सर्गे चतुःपंचाशत्तमश्लोकपर्यन्तं अनुष्टुब्वृत्तम् ॥ १ ॥

मुनिं विशिनष्टि । बिभ्रदिति । संध्यायाः अत्र संध्यापदेन संध्याकाले उपासनाख्यकर्मविशेषमित्यर्थः तस्या विधिः विधानं अनुष्ठानमिति यावत् तस्मिन्नपि यत् स्नानं तेन संवर्धिता रुक् कान्तिर्यासां ' त्विट् प्रभा रुक् रुचिः '

तेजसातपसो दीप्तः स्निग्धश्च करुणागुणात् ।
समं चादर्शितादित्यचन्द्रोदय इवार्णवः ॥ ३ ॥
शिरःप्रदेशलम्बिन्या कुर्वन् रुद्राक्षमालया ।
फलिता इव तीर्थाम्भःसेकपुण्या जटालताः ॥ ४ ॥
अरण्यदेवताभिश्च प्रयुक्तबलिमङ्गलः ।
व्रती निरगमत् सत्रान्मेघाद्व्रध्न इव ज्वलन् ॥ ५ ॥
निनाय हरिणव्रातः स्वयं यत्नेन वर्धितम् ।
प्रस्थितं सह संरुध्य बाष्पापूरितलोचनौ ॥ ६ ॥

---

इत्यमरः शालीनां शूकानि तीक्ष्णाग्राणि तेषां अपि यानि अग्राणि तद्वत् पिङ्गला पिशङ्गा एतादृश्यः । तप एव वह्निः अग्निः तस्य ज्वाला इव ज्योतींषि इव जटाः सटाः बिभर्ति इति बिभ्रत् भृधातोः लटः शत्रादेशे नाभ्यस्ताच्छतुरिति निषेधेन नुमभावः । उपमा रूपकं च ॥ २ ॥

तपस इति । तपसः कृच्छ्रादिकर्मणः 'तपः कृच्छ्रादिकर्म च' इत्यमरः । तस्य तेजसा कान्त्या दीप्तः प्रकाशितः च करुणायाः कृपायाः गुणः तस्मात् स्निग्धः आर्द्रः समं यथास्यात्तथा तुल्यं यथातथा आदित्यः सूर्यः चन्द्रः शशी तयोः उदयः संदर्शितः आदित्यचन्द्रोदयो यस्मिन् एतादृशः अर्णवः अर्णांसि उदकानि सन्ति यस्मिन् इत्यर्णवः समुद्रः अर्णसो लोपश्चेति मत्वर्थीये वप्रत्यये सलोपः स इव स्थितः । उपमालङ्कारः ॥ ३ ॥

शिर इति । शिरसः मस्तकस्य प्रदेशः प्रान्तभागः तत्र लम्बिन्या लम्बमानया एतादृश्या रुद्राक्षाणां मालया स्रजा हेत्वर्थे तृतीया तया हेतुनेत्यर्थः । तीर्थस्य अम्भः उदकं तस्य सेकः सेचनं तेन या पुष्टिः तया जटा एव लताः प्रततयः 'वल्ली तु व्रततिर्लता' इत्यमरः । फलानि सञ्जातानि यासां ताः फलिताः 'तदस्य सञ्जातं' इति तारकादित्वादितच्प्रत्ययः । यद्वा फलतीति फलिता फलनिष्पत्तौ इत्यस्मात् गत्यर्थाकर्मकेत्यादिना कर्तरिक्तः । ता इव कुर्वन् रुद्र लम्ब शता । एतादृशः उत्तरश्लोकेति प्रथमश्लोकस्थक्रियायामन्वयः । उपमालङ्कारः ॥ ४ ॥

अरण्येति । अरण्यस्य विपिनस्य देवताः अभिमानिदेवताः । तासां सत्त्वे प्रमाणं तु 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यां' इति बादरायणसूत्रमेव । प्रयुक्तानि कृतानि बलयः पुष्पफलादिबलिरूपाणि मंगलानि भद्राणि यस्मै एतादृशः । व्रती व्रतं नियमः अस्यास्तीति व्रती 'अत इनि ठनौ' इति इनिः । ज्वलति दीप्यते इति ज्वलन् दीप्यमान इत्यर्थः । एतादृशः स विश्वामित्रः मेघात् अभ्रात् व्रध्न इव सूर्य इव 'भास्कराहस्करव्रध्न' इत्यमरः । सत्रात् यज्ञविशेषात् निरगमत् निः पूर्वाद्गमेर्लुङ् लृदित्वादङ् । उपमालङ्कारः ॥ ५ ॥

निनायेति । अत्र निनायेति क्रिया विश्वामित्रकर्तृका तृतीयश्लोकोपात्तविशेष्ययोः मेदिनीशसुतयोः कर्मत्वप्रयोजिका । स्वयं स्वतः यत्नेन प्रयत्नेन वर्धितं वृद्धिं प्रापितं सह अथात् आत्मना प्रस्थितं कृतप्रस्थानं प्रपूर्वात्तिष्ठतेः

गमनव्याहृतारम्भप्रणामेषु महर्षिभिः ।
पाणिभिः शिरसि स्पृष्टौ हव्यधूमसुगन्धिभिः ॥ ७ ॥
वैखानसवधूहस्तलम्भितार्घ्यकृताशिषौ ।
तौ द्रष्टुकामौ मेदिन्या ईश्वरस्य सुतौ धनुः ॥ ८ ॥
ततश्चिरपरित्यक्तं गौतमस्य तमोनुदः ।
विवेश विश्वभुग्धाम्नो धाम वर्त्मवशाद्वशी ॥ ९ ॥
स्थपुटासु कुटीरस्य निकटाङ्गणभूमिषु ।
प्ररूढदर्भसन्दर्भघासग्रासोद्यतद्विपम् ॥ १० ॥

---

आदिकर्मणि क्तः एतादृश हरिणानां व्रात समूह 'स्तोमौघनिकरव्रातः' इत्यमरः । सरुध्य निरुध्य बाष्पैः अश्रुभिः 'बाष्पमूष्माश्रु' इत्यमर. आपूरिते किंचित्पूर्णे लोचने नेत्रे ययोस्तौ गमनस्य व्याहृत उक्तिः तस्य आरम्भे ये प्रणामा. नमस्काराः तेषु इतो वय गच्छाव. इति भाषणसमये नमस्कारेषु इत्यर्थ.।महर्षिभिः महातपस्विभिः कर्तृभिः हूयते इति हव्य अचोयत् इति यत् प्रत्ययः तस्य यो धूमः तेन सुगधयः 'गधस्येदुत्पूति' इत्यादिना गधस्येकारादेशः तैः पाणिभिः हस्तैः शिरसि मस्तके स्पृष्टौ कृतस्पर्शौ वैखानसानां तपस्विनां या वध्वः स्त्रियः तासां ये हस्ताः तैः लम्भित प्रापित अर्घ्य पूजादिक ययोः तौ च तौ कृता-शिषौ च कृताशीर्वादौ एतादृशौ तौ। धनुः जनकगृहस्थित शकरधनुः द्रष्टुं अवलोकितु कामौ ययोस्तौ 'तुकाममनसोरपि' इति मलोपः । मेदिन्याः पृथ्व्याः ईश्वरस्य अधिपतेः दशरथस्य 'स्थेशभासेत्यादिना' ईशतेः वरच् सुतौ पुत्रौ रामलक्ष्मणौ निनाय नयति स्म नीञ् प्रापणे लिट् ॥ ६ ॥ ७ ॥ ८ ॥

अथ कुलकेन गौतमस्य आश्रमपद वर्णयन् तत्र विश्वामित्रादीनां प्रवेश-माह—तत इति । वशी जितेन्द्रियः ततः विश्वामित्रादीनां प्रस्थानानतर वर्त्म मार्गः तस्य वश अधीनत्व तस्मात् मार्गक्रमणप्रसगादित्यर्थ. चिर चिर-काल परित्यक्त उज्झित सुप्सुपेति समास. तमोनुदः तमः अज्ञान नुदति प्रेरयति नाशयतीति यावत् स तमोनुद् तमः शब्दे उपपदे नुद प्रेरणे इत्य-स्मात् क्विप् उपपदसमासः । तस्य विश्व अशेष भुङ्क्ते भक्षयति इति विश्वभुक् अग्निः 'क्विप्चेति' क्विप् स इव धाम तेजो यस्य एतादृशस्य गौतमस्य एतन्ना-मकमुनेः धाम स्थानं 'धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयो.' इति मेदिनी विवेश विश् प्रवेशने लिट् । अनुप्रासालङ्कारः ॥ ९ ॥

तदेव धाम वर्णयति । स्थपुटास्विति । कुटीरस्य अल्पा कुटी कुटीरः अल्प-पर्णशाला तस्य 'कुटीशमीशुण्डाभ्यो रः' इत्यनेन अल्पार्थे रप्रत्ययः । स्थपुटासु नतोन्नतासु निकटे समीपे या अगणभूमयः अगणभुव इत्यर्थः तासु प्ररूढा उत्पन्नाः दर्भाः कुशाः तेषां सदर्भः सबध. समूह इति यावत् घासश्च गवाद-नीयतृणविशेषश्च तयोः ग्रासः भक्षण तत्र उद्यताः प्रवृत्ताः द्विपाः हस्तिनः यस्मिन् एतादृशं । अनुप्रासः ॥ १० ॥

क्वचिदुद्देहिकाऽऽलीढजीर्णवल्कलमन्यत ।
आरण्यतुटुमच्छिन्नशीर्णकृष्णमृगाजिनम् ॥ ११ ॥
तलस्थितजरत्कुम्भमुखान्निर्गच्छताऽहिना ।
आवर्जितपयस्तिम्यदृक्षमूलमिव क्वचित् ॥ १२ ॥
क्वचिद्विष्णुप्रतिच्छन्द कुक्षिस्थविवराननात् ।
नकुलैरन्नवत्कृष्टवेष्टमानसरीसृपम् ॥ १३ ॥
तस्मिन्निजपदस्पर्शत्याजितग्रावविग्रहम् ।
पप्रच्छ श्रीमय तेजो राम शापस्य सम्भवम् ॥ १४ ॥

---

पुन कथ तदाह—क्वचिदिति । क्वचित् प्रदेशे तद्गतो देहो यस्या सा कीटविशेष तया आलीढानि आस्वादितानि भक्षितानीति यावत् एतादृशानि जीर्णानि वल्कलानि यस्मिन् 'वल्क वल्कलमस्त्रियाम्' इत्यमर । अन्यस्मिन् इति अन्यत अ यशब्दात् 'इतराभ्योपि दृश्यते' इत्यनेन सप्तम्यतात् तसिल् अन्यत्र भागे इत्यर्थ अरण्ये वने भवा आरण्या 'अरण्याण्ण' इति णप्रत्यय ये तुटुमा मूषका 'उन्दुरुस्तुटुमोरधयम्' इति त्रिकाण्डशेष तै छिन्नानि द्वैधीकृतानि अतएव विशीर्णानि इतस्तत पतितानि कृष्णमृगाणां अजिनानि कृत्तयो यस्मिन् 'अजिन चर्म कृत्ति स्त्री' इत्यमर ॥ ११ ॥

तलेति । क्वचित् कुत्रचित् प्रदेशे तले मूले अर्थात् वृक्षस्य स्थित विद्यमान जरत् जीर्ण य कुम्भ घट तस्मात् निर्गच्छता बहिरागच्छता एतादृशेन अहिना सर्पेण हेतुना 'सर्प वृत्रासुरेऽप्यहि' इत्यमर । 'हेतौ' इति हेत्वर्थे तृतीया । आवर्जित आसिक्त यत् पय जलं तेन स्तिम्यत् आर्द्रीभूतं वृक्षमूल यस्मिन् एतादृशमिव । उत्प्रेक्षालंकार ॥ १२ ॥

क्वचिदिति । क्वचित् प्रदेशे विष्णो प्रतिच्छन्द प्रतिरूपं प्रतिमेति यावत् तस्य कुक्षिस्थ कुक्षिगत यत् विवर छिद्र 'सुषिर विवरं बिलं' इत्यमर नाभिरित्यर्थ । तस्य आननात् मुखात् 'अपादाने पंचमी' । नकुलै बभ्रुभि अन्नवत् अन्नतुल्यं कृष्टा आकृष्टा एतादृशा वेष्टमाना सरीसृपा सर्पा यस्मिन् 'चक्री स्यात् सरीसृप.' इति कोश । एतादृशं धाम विवेशेति पूर्वेण अन्वय । उपमानुप्रासौ ॥ १३ ॥

तस्मिन्निति । राम तस्मिन् गौतमाश्रमे निजं स्वीयं यत् पदं चरणं 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमर. । तस्य स्पर्शं तेन त्याजितः त्याजितः ग्रावणः पाषाणस्य विग्रह देह येन 'शरीरं वर्ष्म विग्रह' इत्यमरः एतादृशं श्रीमयं 'चिन्मयं' इतिवत् स्वार्थे मयट् प्रत्यय । तेज ज्योति वर्म । शापस्य संभवत्यस्मात् इति संभव 'ऋदोरप्' इत्यपादाने अप् । कारणमित्यर्थः पप्रच्छ । 'दुहयाच्' इत्यादिना पृच्छेर्द्विकर्मकत्वं ॥ १४ ॥

निगद्यासौ शुनासीरं व्रीडानम्रीकृतानना ।
न्यवीवदद्दनुक्त्वैव यौवनाविनयं पुरा ॥ १५ ॥
ययौ रामोऽथ तं देशं मरुतामास वेगिनाम् ।
पुरुहूतहतभ्रूणच्छेदेभ्यो यत्र संभवः ॥ १६ ॥
प्रतीत्या लंघिताध्वानस्ते तोरणमणित्विषा ।
इति चेतोहरा राममभिव्याततेनिरे गिरः ॥ १७ ॥

---

निगद्येति । असौ पूर्वोक्ता अहल्याख्या स्त्री शुनासीरं इन्द्रं निगद्य उच्चार्य इंद्रनाम गृहीत्वेत्यर्थः व्रीडया लज्जया नम्रीकृतं आननं नम्रीकृतं मुखं यया एतादृशी सती पुरा पुरातनं युवत्याः भावः यौवनं 'भस्याढे' इति पुंवद्भावः तत्सम्बन्धी यः अविनयः वैयात्यं तं अनुक्त्वैव अनुच्चार्यैव न्यवीवदत् अचकथदित्यर्थः । इंद्रकृतसंभोगेन गौतमशापात् इयं अवस्थेति अचकथत् इत्यर्थः ॥ १५ ॥

ययाविति । अथ अहल्योद्धारानन्तरं रामः रामभद्रः यत्र यस्मिन् देशे 'सप्तम्यास्त्रल्' इति त्रल् प्रत्ययः । पुरुहूतेन इन्द्रेण 'पुरुहूतः पुरंदरः' इत्यमरः हतः छिन्नः भ्रूणः गर्भः तस्य छेदेभ्यः खंडेभ्यः वेगः जवः अस्ति एषां ते वेगिनः तेषां मरुतां देवविशेषाणां संभवः उत्पत्तिः । आस तं देशं जनपदं ययौ प्राप 'देवैः हतपुत्रा दितिः कश्यपं पतिं इन्द्रहन्तृपुत्रप्राप्त्यर्थं परिचचार, तत्सेवया परितुष्टः कश्यपः वरेण छंदयामास, सा च इन्द्रहंतारं पुत्रं वव्रे, ततो विमनाः कश्यपः एकवर्षसाध्यं सनियमं व्रतं तस्या उपदिदेश, यदि कश्चन नियमः भ्रश्येत् तर्हि इंद्रहंता पुत्रो न स्यादिति चोक्तवान्, तथा च तदङ्गीकृतं, इन्द्रश्च तदवगत्य तन्नियमच्युतिरूपरन्ध्रान्वेषणार्थं कुशपुष्पदूर्वाद्याहरणैस्तां परिचचार, स्वल्पदिनावशिष्टायां वर्षसमाप्तौ व्रतकृशा दितिः भुक्त्वापि अक्षालितपादा शिश्ये, तद्भ्रमवगत्य इन्द्रः तदुदरं प्रविष्टः सन् गर्भं सप्तधाऽछिनत्, व्रतप्रभावात् अमृतानि गर्भखंडानि पुनरप्येकैकं सप्तधाछिनत्, ततः एकोनपञ्चाशता मरुद्भिः साकं वज्री निःससार' इत्यादि कथा श्रीमद्भागवतस्थाऽत्रानुसंधेया। एतादृशानां मरुतां जन्म यस्मिन्देशे तं ययौ इत्यर्थः ॥ १६ ॥

प्रतीत्येति । विश्वामित्रतपोवनस्था ऋषयः । 'एवमुक्ते तयोर्वाक्ये सर्व एव महर्षयः । विश्वामित्रं पुरस्कृत्य रामं वचनमब्रुवन् ॥ मैथिलस्य नरश्रेष्ठ जनकस्य भविष्यति । यज्ञः परमधर्मिष्ठस्तत्र यास्यामहे वयम् ॥ त्वं चैव नरशार्दूल सहास्माभिर्गमिष्यसि ॥ इति श्रीरामायणे बालकांडे द्रष्टव्यं । तोरणेषु रथ्याशोभार्थं तिर्यक्प्रसारितेषु ग्रथिताः मणयो वज्रवैडूर्यादि रत्नानि तेषां या त्विषः कान्तयः । 'स्युः प्रभा रुग्रुचिस्त्विड् भा' इत्यमरः । तासां प्रतीत्या ज्ञानेन मणिरत्नप्रकाशेनेति यावत् । लंघितः अतिक्रान्तः अध्वा मार्गः यैस्ते । 'अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः ।' इत्यमरः । इति वक्ष्यमाणप्रका-

मत्तमातङ्गसन्दानदामनिर्दलितत्वचः ।
अजय्यत्वं वदन्तीव यस्य पर्य्यन्तभूरुहः ॥ १८ ॥
ताराव्रजस्पृशो याति पिधानत्वं निशाकरः ।
यत्र प्राकारचक्रस्य नभोमध्यस्थमण्डलः ॥ १९ ॥
मध्ये कुवलयाक्रान्तमहापद्मविभूषणः ।
अवतीर्णघनालिश्रीर्यत्खातः सागरायते ॥ २० ॥

---

रेण चेतांसि अन्तःकरणानि हरन्ति आल्हादयन्ति ताः चेतोहराः मनोविनोदावहाः गिरः सभाषणानि राम श्रीराम प्रति अभिव्यासेनिरे अतिशयेन विस्तारितवन्तः। वि आङ् उपसर्गपूर्वस्य तनु विस्तारे इत्यस्य लिटि रूपम् ॥ १७ ॥

मत्तेति । मत्ताः उन्मत्ताः ये मातंगाः हस्तिनः तेषां सदानस्य बंधनस्य यानि दामानि तैः निर्दलिताः संघृष्टाः त्वचः येषां एतादृशाः यस्य पुरस्य पर्यंतभूरुहः पर्यंते समीपे भूरुहः वृक्षाः जेतुं शक्याः जय्याः न जय्याः अजय्याः तेषां भावः अजय्यत्वं 'क्षय्यजय्यौ शक्यार्थे' इति निपातनात् अयादेशः। तत् वदंतीव । मत्तमातंगदामसंघर्षेऽपि अस्माकं त्वगेव संघृष्टा नतु कोप्यवयवो भग्नः अतः वयं केनापि अजय्या इति वदतीवेत्यर्थः । उत्प्रेक्षानुप्रासश्च ॥ १८ ॥

तारेति । यत्र नगरे ताराणां ऋक्षाणां व्रजः समूहः 'नक्षत्रमृक्षं भं तारा' इत्यमरः तमः स्पृशतीति ताराव्रजतमःस्पृक् 'स्पृशोनुदके क्विन्' इति क्विन् 'क्विन्प्रत्ययस्य' इति कुत्वं तस्य। प्राकारस्य वरणस्य यच्चक्रं अथवा प्राकार एव चक्रं 'प्राकारो वरणः सालः' इत्यमरः । तस्य नभसः आकाशस्य यो मध्यः तत्र तिष्ठतीति नभोमध्यस्थं 'सुपीति योगविभागात् कः । तत् मंडलं बिंबं यस्य 'बिंबोऽस्त्री मंडलं त्रिषु' इत्यमरः । एतादृशः निशाकरः निशां रात्रिं करोतीति निशाकरः चंद्रः । निशाशब्दे उपपदे करोतेष्टः । पिधानस्य आच्छादनस्य भावः पिधानत्वं 'तस्य भावस्त्वतलौ' इति भावे त्वप्रत्ययः । 'अपिधानतिरोधानपिधान' इत्याद्यमरः याति प्राप्नोति । अनेन प्राकारस्य अत्युच्चत्वं ध्वन्यते । अतिशयोक्त्यलंकारः ॥ १९ ॥

यत्खातेति । यस्य नगरस्य खातं पुष्करिणी सागरः समुद्रः इव आचरति सागरायते सागरशब्दात् 'कर्तुः क्यङ् सलोपश्च' इति क्यङ् । सागरतुल्याचार-विशेषणाभ्यां द्रढयति । मध्ये खातमध्ये कुवलयैः चंद्रविकासिकमलैः आक्रांतः व्याप्तः महापद्मानि महासूर्यविकासिकमलानि विभूषणानि यस्य कुवलयक्रांत-श्चासौ महापद्मविभूषणश्चेति । समुद्रपक्षे कोः पृथ्व्याः वलयं कंकणमिव आक्रांतः महापद्मः निधिविशेषः विभूषणं यस्य । कुवलयश्चासौ आक्रांत-विभूषणश्च । अवतीर्णाः मधुपानार्थं कमलेषु प्राप्ताः घनाः निबिडाः 'घनं निरंतरं सान्द्रं' इत्यमरः अलयः भ्रमराः तैः श्रीः शोभा यस्य एतादृशस्य । पक्षे: अवतीर्णाः जलग्रहणार्थं कृतावताराः या घनालिः मेघपंक्तिः तया श्रीः शोभा यस्य । श्लेषालंकारः ॥ २० ॥

वप्राजगरभोगेन वेष्टमानः समन्ततः ।
पिण्डीभूत इव त्रासाद्घनो यद्गृहसञ्चयः ॥ २१ ॥
यद्गोपुरविटङ्काग्रचन्द्रकान्तमणिस्रवम् ।
रसयन्ति स्यदश्रान्ताः शीतदीधितिवाजिनः ॥ २२ ॥
विटङ्कभुजसम्प्राप्तसहस्रकरमूर्त्तिना ।
विग्रहेण यदावाससन्तानो भार्गवायते ॥ २३ ॥

---

वप्रेति । वप्र परिखोद्धृतमृत्कूट 'स्याच्चयो वप्रमस्त्रियाम्' इत्यमरः तत्र ये अजगराः लिलित्साः 'लिलित्सः स्यादजगरे' इत्यमरः तेषां यो भोगः शरीर 'अहेः शरीर भोगः स्यात्' इत्यमरः जात्यैकवचन तेन समततः परितः वेष्टमान इति । अत्र वेष्टयमान इति पाठः साधुः । वेष्टयतेऽसौ वेष्टयमानः घनः निरंतरः यस्य नगरस्य गृहाणि तेषां संचयः समूहः 'वारसंघातसंचयाः' इत्यमरः त्रासात् अजगरभीतेः हेतोः पिंडीभूत इव आसीत् इति शेषः । अत्र यद्गृहाणां निबिडत्वस्य अजगरत्रासहेतुजन्यत्वेन उत्प्रेक्षणात् उत्प्रेक्षालङ्कारः ॥ २१ ॥

यद्गोपुरेति । यस्य नगरस्य गोपुर पुरद्वार 'पुरद्वार तु गोपुर' इत्यमरः तस्य ये विटङ्काः कपोतपालिकाः तेषां यानि अग्राणि तत्सम्बधिनो ये चन्द्रकान्तमणयः तत्सम्बधी यः स्रवः निर्झरः त चन्द्रकिरणस्पर्शैः चंद्रकान्तमणयः स्रवतीति प्रसिद्ध । स्यदेन वेगेन श्रांताः 'रहस्तरसी तु रयः स्यदः' इत्यमरः । शीता, दीधितयः किरणाः यस्य स शीतदीधितिः चन्द्र. 'हिमांशुश्चन्द्रमाश्चन्द्रः' इत्यमरः तस्य वाजिन. अश्वा. 'वाजिवाहार्वगंधर्व.' इत्यमरः । रसयन्ति आस्वादयन्ति । अतिशयोक्त्यलङ्कार' । अनया च अतिशयोक्त्या यद्गोपुरस्य अत्युच्चत्व ध्वन्यते ॥ २२ ॥

विटंकेति । यस्य नगरस्य आवासानां गृहाणां संतानः परंपरा विग्रहेण निजस्वरूपेण भार्गवायते परशुरामायते भार्गवशब्दात् क्यङन्तात् तङ् । भार्गवसादृश्य विशेषेण द्रढयति । विटंकाः कपोतपालिकाः त एव भुजाः बाहवः तैः संप्राप्ता संपृष्टा सहस्रकरस्य सूर्यस्य 'भानुर्हंसः सहस्रांशुः' इत्यमरः मूर्तिः शरीर येन । भार्गवपक्षे विशिष्टः टङ्कः खनित्र 'टङ्को नीलकपित्थे च खनित्रे टङ्कनेऽस्त्रियाम्' इति मेदिनी । किंचित्तत्सादृश्यात् टङ्कशब्देन अत्र परशुः गृह्यते । तेन युक्तः भुजः विटंकभुज. 'शाकपार्थिवादित्वादुत्तरपदलोपः' । विटंकभुजेन संप्राप्ता लब्धा जितेति यावत् । सहस्रं कराः हस्ताः यस्य स तथा कार्तवीर्यार्जुनः तस्य मूर्तिः देहो येन एतादृशेन विग्रहेण । श्लेषः उपमा च ॥ २३ ॥

यद्देवगृहशृङ्गस्थपद्मरागप्रभाऽऽहतम् ।
व्योममध्यं प्रपद्यापि बिम्बं बालायते रवेः ॥ २४ ॥
हर्म्यशृङ्गेषु निर्धूतध्वान्ता यत्र मणित्विषः ।
ज्यौत्स्नः कृष्ण इति ज्ञानं जने रुन्धन्ति पक्षयोः ॥ २५ ॥
यत्र वातायनासन्नवारमुख्यामुखेन्दवः ।
रथ्यासञ्चारिणो यूनः स्खलयन्ति पदे पदे ॥ २६ ॥
श्रुत्वा यत्सौधपृष्ठेषु विमानशिखिनिस्वनम् ।
याति शैथिल्यमुष्णांशुहयभोगीन्द्रबन्धनम् ॥ २७ ॥

---

यद्देवेति । यस्य यत्सम्बन्धीनि देवगृहाणि देवालयानि तेषां यानि शृङ्गाणि शिखराणि 'शृङ्ग प्राधान्यसान्वोश्च' इत्यमरः तत्सम्बन्धिनो ये पद्मरागाः रत्नविशेषाः तेषां या प्रभा तया आहतं ताडितं युक्तमित्यर्थः । एतादृशं रवेः सूर्यस्य आकाशमध्यगतत्वेन रक्तिमाभावेऽपि इत्यर्थः । बाल इव आचरति बालायते बालशब्दात् आचारक्यङन्तात् लट् । बाल्यावस्थायां सूर्यो यथा आरक्तो भवति एवं मध्याह्नेपि यदीयदेवालयशिखरपद्मरागकान्त्या आरक्तो भवति । अतिशयोक्त्यलंकारः ॥ २४ ॥

हर्म्येति । यत्र यस्मिन् पुरे हर्म्याणां धनिकवसतिगृहाणां 'हर्म्यादि धनिनां वासः' इत्यमरः । शृङ्गेषु शिखरेषु निर्धूतं क्षालितं नाशितमिति यावत् । ध्वान्तं अंधकारो याभिस्ताः एतादृशः मणीनां रत्नानां त्विषः कान्तयः 'स्युः प्रभा रुग्रुचिस्त्विड् भा' इत्यमरः । पक्षयोः शुक्लकृष्णयोः ज्योत्स्नया चन्द्रिकया युक्तः ज्यौत्स्नः शौषिकोण् । कृष्णः कृष्णवर्णः इति एवं प्रकारेण ज्ञानं जने लोके रुन्धन्ति प्रतिबन्धतीत्यर्थः ॥ २५ ॥

यत्रेति । यत्र वातायनानि गवाक्षाणि तेषां आसन्नाः समीपवर्तिन्यः याः वारमुख्याः तासां मुखान्येव इन्दवः । रथ्यायां अभीक्ष्णं सञ्चरतीति रथ्यासञ्चारिणः 'सुप्यजातौ' इति णिनिः तान् यूनः तरुणपुरुषान् पदे पदे प्रतिपदमित्यर्थः । स्खलयन्ति ॥ २६ ॥

श्रुत्वेति । सुधया चूर्णेन निर्मितः सौधः शैषिकोण् 'सौधोऽस्त्री राजसदनमित्यमरः । यस्य नगरस्य सौधाः राजभवनानि तेषां यानि पृष्ठानि तेषु विमानानां ये शिखिनः मयूराः तेषां निःस्वनं ध्वनिं श्रुत्वा आकर्ण्य उष्णाः तीक्ष्णाः अंशवः किरणाः यस्य स उष्णांशुः सूर्यः तस्य ये हयाः अश्वाः तत्सम्बन्धि यद्भोगीन्द्रबन्धनं भोगिनां सर्पाणां इन्द्राः शेषषष्ठीसमासः न त्वत्र निर्धारणे षष्ठीसमासः 'न निर्धारणे' इति निषेधात् तैः यद्बन्धनं तत् शैथिल्यं शिथिलभावं ब्राह्मणादित्वात् ष्यञ् शिथिलत्वमित्यर्थः याति गच्छति । मयूराणां सर्पाणां च जातिविरोधः प्रसिद्ध एव । अतिशयोक्त्यलंकारः । अनेन यत्सौधशिखराणां सूर्यमार्गपर्यन्तोच्चत्वं ध्वन्यते ॥ २७ ॥

सोपानरत्ननिर्भिन्नतमश्छेदेन दर्शिताः ।
ग्लायन्ति यत्र न सरश्चक्रवाका निशास्वपि ॥ २८ ॥
यस्य हर्म्यसमासन्नतिग्मदीधितिवाजिनः ।
मन्दं व्रजन्ति सङ्गीतवीणाऽऽवर्जितचेतसः ॥ २९ ॥
पौरसन्दोहभोगस्य श्रिया वज्रभृतः पुरीम् ।
अधो विधत्ते धामेदं मैथिलस्य पुरं परम् ॥ ३० ॥
इति व्याहरतैवाथ तेन स्थानं महीयसः ।
परमृद्धं क्रतुपतेर्निन्याते नेतुरात्मजौ ॥ ३१ ॥

---

सोपानेति । यत्र नगर्यां सोपानानां आरोहणानां 'आरोहणं स्यात्सोपानं' इत्यमरः यानि रत्नानि मणयः तैः निर्भिन्नं नाशितं यत् तमः अंधकारः तस्य छेदेन नाशेन हेतुना 'हेतौ' इति हेत्वर्थे तृतीया । दर्शिताः एतादृशा ये सरसः सरोवरसंबंधिनः चक्रवाकाः निशास्वपि रात्रिष्वपि ग्लायंति न दूयते इत्यर्थः। चक्रवाकमिथुनानां रात्रौ परस्परवियोगात् दुःखं जायते, यत्रत्यसरोवरसंबंधिनां तु सोपानरत्नप्रभाभिरंधकारनाशात् परस्परदर्शनात् दुःखलेशोपि नास्ति इत्यर्थः ॥ २८ ॥

यस्येति । यस्य नगरस्य हर्म्याणि गृहाणि तेषां समासन्नाः अतिकमागताः एतादृशस्य तिग्मदीधितेः तीक्ष्णकरस्य सूर्यस्य वाजिनः अश्वाः 'वाजिवाहार्वगंधर्व' इत्यमरः। संगीतस्य गीतस्य गेयस्य संबंधिन्यः वीणाः अत्र वीणाशब्देन लक्षणया वीणाध्वनियो गृह्यते गीतमिश्रितवीणाध्वनय इत्यर्थः । तैः आवर्जितं आकृष्टं चेतः अंतःकरणं येषां एतादृशाः सतः मंदं यथास्यात्तथा व्रजंति गच्छंति । अन्यस्मिन् विषये मनोवृत्तौ हि गतिर्मंदीभवतीति प्रसिद्धं । अतिशयोक्तिः ॥ २९ ॥

पौरेति । पुरे नगरे भवाः पौराः नागरिकाः 'तत्र भवः' इत्यण् तेषां यः संदोहः समूहः 'समूहनिवहव्यूहसंदोहविसरव्रजाः' इत्यमरः तस्य भोगः सर्वसुखसेवनं 'भोगः सुखे' इत्याद्यमरः तस्य धाम मंदिरं सकलभोगाधिकरणमिति यावत् 'धाम रश्मौ प्रभावे च तेजोमंदिरजन्मसु' इति विश्वः । मिथिलायाः अधिपतिः मैथिलः जनकः शैषिकोऽण् । तस्य परं श्रेष्ठं पुरं नगरं श्रिया स्वशोभया हेतुना वज्रं पविं बिभर्तीति वज्रभृत् इंद्रः 'क्विप्‌च' इति क्विप्। तस्य इंद्रस्य 'वज्रोऽस्त्री हीरके पवौ' इत्यमरः । पुरीं नगरीं अमरावतीमित्यर्थः । अधः नीचैः विधत्ते कुरुते । विपूर्वाद्धधातेर्लट् 'श्लौ' इति द्वित्वं । स्वशोभया अमरावतीं तिरस्कुरुते इत्यर्थः ॥ ३० ॥

इतीति । अथ पुरवर्णनानंतरं इति पूर्वोक्तप्रकारेण व्याहरति भाषते इति व्याहरन् विआङ्पूर्वाद्धृधातोर्लटः शत्रादेशः । तेन व्याहरतैव भाषमाणेनैव तेन विश्वामित्रेण अतिशयेन महान् इति महीयान् महच्छब्दात् 'द्विवचनविभज्ये

कृतपाद्यो भुवो भर्तुः स व्रती प्रमदाश्रुभिः ।
विष्टरं परिजग्राह सिंहचर्मोत्तरच्छदम् ॥ ३२ ॥
स्तुत्याऽऽसुतीवलं सत्रे जगादोत्साहयन्मुनिः ।
प्रभोर्भ्राजत एवाग्रे निस्पृहेणापि हि स्तुतिः ॥ ३३ ॥
यो धर्मस्य धृतः सप्ततन्तुभिः सगरादिभिः ।
तन्तुः स एव सम्राजा सम्यगालम्बितस्त्वया ॥ ३४ ॥

---

ईय सुन् टेरिति टिलोपः एतादृशस्य क्रतोः यज्ञस्य पतिः तस्य मैथिलस्य ऋद्धं समृद्धं पुरं नगरं भयाति रक्षानि इति नेता दशरथः । नीञ् प्रापणे लट् । तस्य आत्मनः देहात् अजनिषाता इति आत्मजौ पुत्रौ 'पञ्चम्यामजातौ' इति जनेर्डप्रत्ययः रामलक्ष्मणौ निन्याते । नीञ् प्रापणे दुहादित्वात् द्विकर्मकत्वेन प्रधाने कर्मणि लट् 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इतिभाष्योक्तेः। अनुप्रासालंकारः ॥ ३१ ॥

कृतपाद्येति । भुवः पृथ्व्याः भर्तुः पालकस्य जनकस्य प्रमदस्य आनंदस्य सम्बधिनि यानि अश्रूणि नेत्रोदकानि तैः कृतपाद्यः पादार्थं यत् उदकं तत् पाद्यं । कृतं पाद्यं यस्य व्रतं नियमः अस्यास्तीति व्रती सः विश्वामित्रः सिंहस्य चर्म कृत्तिः तत् उत्तरच्छदः उपरि आस्तरणं यस्य एतादृशं विष्टरं आसनं । विष्टरो विटपी दर्भमुष्टिः पीठेत्यमरः। परिजग्राह स्वीचकारेत्यर्थः ॥ ३२ ॥

स्तुत्येति । मुनिः विश्वामित्रः सत्रे यज्ञे आसुतिः सोमाभिषवः सोऽस्यास्तीति आसुतीवलः 'रजः कृष्यासुतिपरिषदोति वलच्प्रत्ययः वल इति दीर्घः तं यजमानं जनकं उत्साहयन् उत्साहं प्रापयन् सन् जगाद। ननु निस्पृहस्य तस्य किं यजमानस्तुत्येत्यत आह—प्रभोरिति हि प्रभोः समर्थस्य अग्रे अग्रभागे निस्पृहेणापि निरिच्छेनापि कृतेति शेषः स्तुतिः स्तवनं भ्राजते एव शोभत एवेत्यर्थः । भ्राजृ दीप्तौ लट् । अथवा भ्राजत इति शतृप्रत्ययान्तं षष्ठ्यन्तं प्रभोर्विशेषणं । स्तुतिरित्यस्य युज्यते इति शेषः । निस्पृहेणापि तेजस्विनः प्रभोः स्तुतिः युज्यते इति यावत् ॥ ३३ ॥

*स्तुतिमेव तावदाह* सप्तभिः । य इति । *गरेण विषेण* सहितः सगरः एतन्नामा राजा आदिर्येषां ते सगरादयः तैः कर्तृभिः । सप्तभिः अग्निजिह्वाभिः तन्यते हविर्द्रव्यादिना विस्तार्यते इति सप्ततन्तवः मखाः । तनोतेरौणादिकस्तुन् प्रत्ययः। सप्ताग्निजिह्वाश्च 'काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा ॥ स्फुलिंगिनी विश्वरूपी च देवी लेलायमाना इति सप्तजिह्वाः' इति । तैः यज्ञैः यः धर्मस्य पुण्यस्य आचारस्य वा 'धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः' इत्यमरः। तंतुः सूत्रं धृतः अवलंबितः स एव सम्राजा सपूर्वाद्राजतेः क्विप् राजसूययागकर्तृत्वादिविशेषणमपविशिष्टेनेत्यर्थ । तदुक्तं अमरसिंहेन 'येनेष्टं राजसूयेन मंडलस्येश्वरश्च यः । शास्ति यश्चाज्ञया

अपि सत्यां विस्रमायामविस्रस्तां तव श्रियम् ।
विक्रमस्य वदन्तीव सत्रसम्भारसम्पदः ॥ ३५ ॥
कृतवेलाव्यतिक्रान्तिस्त्वरासङ्कोचिताम्बरा ।
साभिसारेव ते कीर्तिर्दूरमाक्रामदाशया ॥ ३६ ॥
कच्चित्स्वार्थे क्रतुरयं स्वर्ग्यस्तव फलस्पृहाम् ।
विनैव प्रथते कच्चिन्निःस्वम्प्रति वदान्यता ॥ ३७ ॥

---

राज्ञ स सम्राट्' इति । एतादृशेन त्वया सम्यक् यथास्यात्तथा आलम्बितः अवष्टब्धः । यज्ञादिधर्माचरणेन पूर्वजानतिशेपे इत्यर्थः । अनुप्रासालङ्कारः ॥ सूर्यवंश्यो बाहुको नाम राजा शत्रुभिः हृतराज्यः सभार्यो वनं विवेश । तं मृतं अनुसरिष्यन्ती तत्पत्नी गर्भवतीति ज्ञात्वा और्वाख्येन गुरुणा निवारिता । अथ सपत्नीभिरेना विषं दत्तं तेन सह उत्पन्नोऽतः सगर इति । उक्तं च श्रीमद्भागवते नवमस्कन्धे 'सोऽरिभिर्हृतराज्यस्तु सभार्यो वनमाविशत् । वृद्धं तं पंचतां प्राप्तं महिष्यनुमरिष्यती । और्वेण जानतात्मानं प्रजावन्तं निवारिता । आज्ञायास्यै सपत्नीभिर्गरो दत्तोऽन्नसाहसः । सह तेनैव सञ्जातः सगराख्यो महायशाः । सोऽश्वमेधैरयजत सर्ववेदसुरात्मकं । और्वोपदिष्टयोगेन हरिमात्मानमीश्वरं । सगरश्चक्रवर्त्यासीत्' इत्यादि ॥ ३४ ॥

अपीति । सत्रस्य यज्ञविशेषस्य सम्भाराणां सम्पदः सम्पत्तयः कर्त्र्यः विस्रसायां जरायां, 'विस्रसा जरा' इत्यमरः, सत्यामपि विद्यमानायामपीत्यर्थः तव । विक्रमस्य पराक्रमस्य श्रियं शोभां वदन्तीव कथयन्तीव । उत्प्रेक्षालङ्कारः ॥ ३५ ॥

कृतवेलेति । हे जनक अभिसारेव कृतसङ्केतस्थलगामिनी कान्तार्थिनी स्त्रीव 'कान्तार्थिनी तु या याति सङ्केतं साभिसारिका' इत्यमरः । ते कीर्तिः आशया दिशया इच्छया च दूरं आक्रामत् आक्रान्तवतीत्यर्थः 'क्रमः परस्मैपदेषु' इति दीर्घः । अभिसारिकापक्षे कृतवेलाव्यतिक्रान्तिः वेलायाः समयस्य व्यतिक्रान्तिः अतिक्रमणं । कृता वेलाव्यतिक्रान्तिः यया । कीर्तिपक्षे वेलायाः समुद्रतीरस्य व्यतिक्रान्तिः व्यतिक्रमणं समुद्रपर्यन्तं प्रसृतेत्यर्थः । अभिसारिकापक्षे त्वरया संभ्रमेण सङ्कोचितं आकुञ्चितं अम्बरं वस्त्रं यया 'अम्बरं व्योम्नि वाससि' इत्यमरः । कीर्तिपक्षे त्वरया वेगेन क्षिप्तेत्यर्थः । सङ्कोचितं न्यूनीकृतं आकाशं यया कीर्तिव्यापनस्य आकाशमपि न्यूनं जातं इत्यर्थः । श्लेषालङ्कारः उपमा च ॥ ३६ ॥

कच्चिदिति । अयं स्वर्गाय हितं स्वर्ग्यः 'तस्मै हितं' इति यत् प्रत्ययः । तव क्रतुः यज्ञः स्वस्य अर्थः प्रयोजनं तद्विषये अस्ति कच्चित् स्वर्गप्रदो भवति कच्चित् इति तात्पर्यं । तव फले स्पृहा इच्छा तां विनैव निर्गतं स्वं धनं यस्मात् स निःस्वः दरिद्रः तं प्रति वदान्यः दाता तस्य भावो वदान्यता'तस्य भावस्त्वतलौ' इति तल् । दातृता प्रथते कच्चित् प्रख्यातिः कच्चित् विस्तीर्णा भवति कच्चित् इति यावत् ॥ ३७ ॥

आदाय करमाढ्येभ्यः कीकटेष्वपि वर्षसि ।
प्रर्याय वारि सिन्धुभ्यः स्थलेष्विव घनाघनः ॥ ३८ ॥
नवे वयसि राज्यार्थे प्रविधाय जरां गतान् ।
कच्चित्पुष्णासि ते भृत्यान् सादरं समयेऽक्षमे ॥ ३९ ॥
त्वद्विक्रमेण वैधव्यं प्रापिता रिपुयोषितः ।
बालप्राणार्थिनीः कच्चित्सम्यग्रक्षसि बन्धुवत् ॥ ४० ॥
द्वयेनादौ त्रिवर्गस्य कच्चित्साम्यं गतश्चिरम् ।
धर्मोऽद्य वयसो वृद्ध्या सह संवर्द्धते तव ॥ ४१ ॥
इति प्रश्नावकाशस्य विरामे रामलक्ष्मणौ ।
मुनेर्विवेद वैदेहो द्रष्टुकामौ निजं धनुः ॥ ४२ ॥

---

आदायेति । घनाघन वर्षुकमेघ 'वर्षुकाब्दो घनाघन ' 'हन्तेर्घत्व च' अनेन हन्तेर्द्वित्व अभ्यासस्यागागमे घत्वे उत्तरस्य अभ्यासाच्चेति कुत्व हन्तेर्घत्व च । अनेन सिंधुभ्य समुद्रेभ्य 'उदन्वानुदधि सिंधु' इत्यमर । वारि उदक प्रर्याय प्राश्य स्थलेष्विव स्थलीष्विवेत्यर्थ आढ्येभ्य धनिकेभ्य कर राजदेय भाग आदाय गृहीत्वा कीकटेषु दरिद्रेषु 'कीकट कृपणे नि स्वे भिक्षु' इति मेदिनी वर्षस्यपि वर्षसि किम् इत्यर्थ । आढ्येभ्य करमादाय दरिद्रेभ्यो ददासि किम् । अपि प्रश्ने ॥ ३८ ॥

नव इति । नवे नूतने 'नवीनो नूतनो नव ' इत्यमर । वयसि तारुण्ये इत्यर्थः । राज्यार्थं राज्याय राजकर्मणे इति राज्यार्थ ते तव भृत्यान् प्रविधाय जरा विस्रसां गतान् प्राप्तान् अक्षमे कार्याकरणानर्हे समये काले वार्धक्ये कार्यकरणासमर्थत्व स्पष्टमेव पुष्णासि कच्चित् ॥ ३९ ॥

त्वद्विक्रमेणेति । तव विक्रमः पराक्रम तेन विगतः धवो भर्ता यासा ता विधवा तासा भावो वैधव्य भावे ष्यञ् प्रापिताः बालानां प्राणाः एव अर्था सन्ति यासां ता 'अत इनि ठनौ' इति इनि प्रत्ययान्तात् ऋन्नेभ्योङीप् बाल- प्राणरक्षणैषिणीरित्यर्थ । एतादृशी रिपूणां शत्रूणां योषित स्त्रिय ताः बधुना तुल्य बधुवत् सम्यक् समीचीन रक्षसि किम् ॥ ४० ॥

द्वयेनेति । आदौ तारुण्यावस्थायां त्रयाणा धर्मार्थकामानां वर्ग समूहः 'त्रिवर्गो धर्मकामार्थै 'इत्यमर । तस्य तत्सबंधि द्वौ अर्थकामौ अवयवौ यस्य तत् द्वय तेन सह चिर चिरकालपर्यंत समस्य तुल्यस्य भावः साम्य तुल्यता 'वाच्यलिंगा समस्तुल्य ' इत्यमर गत प्राप्तः धर्मः अद्य तव वयसः वृद्ध्या, सह संवर्धते कच्चित् वृद्धि प्राप्नोति कच्चित् । यथा वयो वर्धते तथा त्रिवर्गमध्ये तव धर्मोपि वर्धते किम् । सहोक्त्यलंकारः ॥ ४१ ॥

इतीति । इति पूर्वोक्तप्रकारेण प्रश्नस्य अनुयोगस्य यः अवकाशः स्थान विषय इति यावत् तस्य विरामे अवसाने प्रष्टव्यार्थानां सर्वेषां पृष्टत्वात् प्रष्ट-

एकमुद्वेचितं तस्य भ्रूचापमनुजीविभिः।
चापस्यानयने हेतुः क्षणमास क्षमापतेः॥ ४३॥
वरवक्त्रेन्दुबिम्बत्विड्ग्रासगृध्नुं परं ग्रहम्।
सीताविवाहसंयोगसुखरोधार्गलान्तरम्॥ ४४॥
अहिर्बुध्न्यपरित्यागतीव्रशोकभरादिव।
मध्ये लोहसमुद्गस्य निःशब्दं शयितं चिरम्॥ ४५॥

---

ह्यार्थाभावेन प्रश्नविरामे सति इत्यर्थः। वैदेहः जनकः रामलक्ष्मणौ कर्ममूर्ती। निज स्वीयं 'स्वके नित्ये निज त्रिषु' इत्यमरः। धनुः चापं द्रष्टुं अवलोकितुं कामो ययोस्तौ द्रष्टुकामौ एतादृशौ मुनेः विश्वामित्रात् विवेद ज्ञातवान्। विद्धातोः लिट्। मुनेरिति बुद्धिकृतमपादानं गृहीत्वा पञ्चमी। बुद्धिकृतमेवा-पादानत्वं स्वीकृत्य ध्रुवमपायेऽपादानं अनेनैव अपादानत्वं स्वीकृत्य भाष्यकृता अपादानप्रकरणं प्रत्याख्यातम्। अनुप्रासालङ्कारः॥ ४२॥

एकमिति। क्षमापतेः तस्य जनकस्य एकं उद्वेचितं उद्धृतं इत्यर्थः। भ्रूचापं भ्रूरेव चापं धनुः। अनुजीवन्ति ते अनुजीविनः किङ्कराः। 'सुप्यजातौ' इति णिनिः। चापस्य धनुषः आनयने प्रापणे क्षणं क्षणमात्रं अत्यन्तसंयोगे द्वितीया। हेतुः कारणं आस बभूवेत्यर्थः। जनकेन भ्रुवः उन्नयनेन चापं आनेतुं सूचिताः अनुजीविनः चापं आनाययामासुः। अतः भ्रूचापोन्नयनं चापानयनस्य कारणं जातमित्यर्थः। अनुप्रासालङ्कारः॥ ४३॥

अथ कलापकेन धनुर्वर्णयति–वरवक्त्रेति। वराणां यानि वक्त्रेन्दुबिम्बानि मुखचन्द्रबिम्बानि तेषां या त्विट् शोभा तस्या यो ग्रासः भक्षणं तद्विषये गृध्नुं अभिलाषुकं परं श्रेष्ठं ग्रहं राहुरूपग्रहं अतएव सीतायाः जानक्याः विवाहस्य परिणयनस्य यः संयोगः तत्सम्बन्धि यत् सुखं तस्य यो रोधः अवरोधः तद्विषये अर्गलान्तरं अर्गलाविशेषः। अर्गला द्वारपिधाने तदुद्घाटनाभावार्थं निर्मितः काष्ठविशेषः। इमानि सर्वाणि चतुर्थश्लोकस्थधनुषो विशेषणानि। रूपका-लङ्कारः॥ ४४॥

अहिर्बुध्न्य इति। अहिर्बुध्न्यः शिवः 'अहिर्बुध्न्योऽष्टमूर्तिश्च' इत्यमरः। तस्य यः परित्यागः तेन तीव्रः यः शोकः तस्य भरादिव भारादिव लोहस्य अयमः यः समुद्गः सम्पुटकः 'समुद्गकः सम्पुटकः' इत्यमरः। तस्य मध्ये मध्यभागे निर्गतः शब्दो यस्मात् तत् निःशब्दं यथा स्यात्तथा चिरं चिरकालं शयितं सुप्तम्। यथा कश्चन प्रियविरहदुःखेन क्वचित् गृहकोणे निःशब्दं शेते तद्वदित्यर्थः। उत्प्रेक्षालंकारः॥ ४५॥

अमार्दवमतिस्तब्धं गुणेनापि न नामितम् ।
ईशेन दर्शितस्नेहं नीचं जनमिवाग्रहम् ॥ ४६ ॥
चक्रीचकार कर्णान्तावतंसितनखद्युतिः ।
तद्दाशरथिरादाय सीताक्रयधनं धनुः ॥ ४७ ॥
ततस्त्रासकरो नादश्चापभङ्गसमुद्भवः ।
दिशः ससर्प रामस्य यशोघोषणडिण्डिमः ॥ ४८ ॥
क्षेत्रभूमिर्गुणस्यासौ सीतया सहिता वृता ।
यत्रे फलवती सद्यः प्रचकम्पेऽखिला पुरी ॥ ४९ ॥

---

अमार्दवमिति । नीचं जनमिव धनुः इति अग्रिमश्लोकस्थपदेन अन्वयः । तत्र धनुःपक्षे मृदुनः भावः मार्दवं 'इगन्ताच्च लघुपूर्वात्' इति भावे अण् । नास्ति मार्दवं यस्य अमार्दवं कठिनम् । नीचजनपक्षे अमार्दवं अविनीतम् । अतिशयितं स्तब्धं अतिस्तब्धं दृढं प्रादिसमासः । पक्षे अतिसूढम् । गुणेनापि ज्ययाऽपि 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । न नामितं न नम्रीकृतं नामितमित्यत्र 'नम् प्रह्वत्वे शब्दे च' इत्यस्मात् णिजन्तात् क्तः । अमन्तत्वात् मित्त्वे प्राप्तेऽपि 'ज्वलह्वलह्मलनमामनुपसर्गाद्वा' इति विकल्पात् ह्रस्वाभावः । पक्षे गुणेनापि विद्याद्युत्कर्षगुणेनापि सन्मार्गे व्यापारयितुमशक्यम् । ईशेन दर्शितः स्नेहः प्रीतिः यस्मिन् शिवस्य प्रियमित्यर्थः । पक्षे ईशेन राज्ञा दर्शितः स्नेहो यस्मिन् । नास्ति ग्रहः ग्रहणं यस्य तत् अग्रहं ग्रहीतुमशक्यं 'ग्रहवृदृनिश्चिगमश्च' इति ग्रहधातोरप् । पक्षे सपर्कानर्हं । श्लेषालङ्कारः ॥ ४६ ॥

चक्रीति । कर्णस्य श्रोत्रस्य अन्तः प्रान्तः तत्र अवतंसिता भूषणीकृता 'पुंस्युत्तंसावतंसौ द्वौ' इत्यमरः । नखद्युतिः नखरकान्तिः येन, धनुर्ज्याकर्षवेलायां हस्तस्य कर्णप्रान्तगामित्वात् इत्यर्थः । एतादृशः दशरथस्य अपत्यं पुमान् दाशरथिः रामभद्रः 'अतइञ्' तत् पूर्वोक्तं सीतायाः जानक्याः यः क्रयः तस्य धनं द्रव्यं एतादृशं धनुः आदाय गृहीत्वा चक्रीचकार चक्रं यथा वर्तुलं एवं मौर्व्या अपि आकर्षणात् वर्तुलं चकारेत्यर्थः । रूपकालङ्कारः ॥ ४७ ॥

तत इति । ततः धनुराकर्षणानन्तरं चापस्य धनुषः भङ्गः नाशः तस्मात् समुद्भवः उत्पत्तिर्यस्य । त्रासं अर्थात् शत्रूणां दुःखं करोतीति त्रासकरः रामस्य रामभद्रस्य यशसः कीर्तेः घोषणं प्रसिद्धीकरणं तस्य डिंडिमः येन सर्वत्र प्रसिद्धिः क्रियते तादृशो वाद्यविशेषः एतादृशः नादः ध्वनिः दिशः काष्ठाः ससर्प जगाम । सृप्लृ गतौ लिट् ॥ ४८ ॥

क्षेत्रेति । गुणस्य सद्गुणानामित्यर्थः । गुणस्येति जात्येकवचनं क्षेत्रभूमिः केदारभूमिः सकलसद्गुणपरिपूर्णेति यावत् । अखिला संपूर्णा 'समस्तनिखिला

रोमोद्भेदापदेशेन हर्षमङ्कुरितं हृदि ।
सिञ्चन्नश्रुप्लवेण स्म मुनिमाह महीपतिः ॥ ५० ॥
प्रौढेऽपि वयसि प्रायो रुणद्धि तपसि स्पृहाम् ।
यच्चापभङ्गदेयं मे प्राप्तं सीमन्तिनीधनम् ॥ ५१ ॥
तद्रामस्य गतं दास्यं विक्रमक्रयलम्भितम् ।
अस्य हस्तद्वितीये मे न्यस्तां विद्ध्यूर्मिलामपि ॥ ५२ ॥
शोकाल्पमस्य वैदेह्या विवाहपरिलम्बजम् ।
हृच्छल्यमस्तुकारेण तपस्यन् निचकर्ष सः ॥ ५३ ॥

---

खिलानि निःशेषे ' इत्यमरः । असौ पुरी मिथिला सद्य प्रकम्पे कम्पितेत्यर्थः । धनुर्भङ्गजनितध्वन्याघातेन निखिला पुरी चकम्पे इति तात्पर्यम् । तत्र पुरीपक्षे सीतया जानक्या सहिता । क्षेत्रभूमिपक्षे सीतया लाङ्गलपद्धत्या सहिता ' सीता लाङ्गलपद्धतिः ' इत्यमरः । तथा वप्रैः नगरप्राकारैः वृता वेष्टिता । पक्षे वप्रैः केदारस्थमृत्कूटैः वृता वेष्टिता । पुरीपक्षे फलवती सुखाद्युपलब्धिमती । पक्षे सस्यसमृद्धिमती । पुरीपक्षे अखिला सम्पूर्णा । क्षेत्रपक्षे अप्रहता ' द्वेऽखिलाप्रहते समे ' इत्यमरः । श्लेषालङ्कारः ॥ ४९ ॥

रोमोद्भेदेति । मह्याः पृथ्व्याः पतिः स्वामी जनकः हृदि हृदये रोम्णां लोम्नां ' तनूरुहं रोम लोम ' इत्यमरः । उद्भेदः प्रादुर्भावः तस्य अपदेशः व्याजः तेन ' व्याजोऽपदेशो लक्ष्यं च ' इत्यमरः । अङ्कुराः सञ्जाताः अस्य स अङ्कुरितः तं ' तदस्य सञ्जातम् ' इति तारकादित्वात् इतच् । हर्षं अश्रूणां नेत्रोदकानां प्लवः सृतिः ' ऋदोरप् ' इत्यप् प्रत्ययः । तेन सिञ्चन् सिञ्चतीति सिञ्चन् सन् मुनिं विश्वामित्रं आह स्म । स्मेति पादपूरणे अतीते वा ' स्मातीते ' ' तु हि च स्म ह वै पादपूरणे ' इत्युभयत्राप्यमरः ॥ ५० ॥

जनकः मुनिमाहेति उक्तं किमुक्तं तदाह—प्रौढेऽपीति । यत् चापभङ्गदेयं चापस्य धनुषः भङ्गे दातव्यं प्रकृष्टेन विक्रमस्य क्रयेण लम्भितं प्रापितं रामस्य दास्यं दासभावं गतं प्राप्तं तत् मे सीमन्तिनीधनं कन्यारूपं धनं प्रौढेऽपि प्रवृद्धेऽपि ' प्रवृद्धं प्रौढमेधितम् ' इत्यमरः । वयसि वार्धक्ये इत्यर्थः । प्रायः तपसि स्पृहां रुणद्धि । अस्य रामभद्रस्य हस्तद्वितीये हस्तश्चासौ द्वितीयश्च तस्मिन् कनिष्ठभ्रातरि लक्ष्मणे ऊर्मिलामपि एतन्नाम्नीं कन्यां मे मया ' ते इति स्यात्त्वयेत्यर्थे मे इति स्यान्मयेति च ' इति त्रिकाण्डशेषः । न्यस्तां अर्पितां विद्धि जानीहि । विद् ज्ञाने लोण्मध्यमैकवचनम् ॥ ५१ ॥ ५२ ॥

शोकेति । तपश्चरतीति तपस्यन् तपसः परस्मैपदं चेति । सः विश्वामित्रः अस्य जनकस्य सम्बन्धसामान्ये षष्ठी । एतच्च शल्यमित्यनेनान्वयः । वैदेह्याः जानक्याः सम्बन्धि परिलम्बनं अवस्रंसनं परिलम्बः भावे घञ् पणीकृतधनुर्ज्याकर्षणाशक्तत्वात्

अथ दूतास्थितः प्रायाद्राजद्वयमनोरथः ।
अयोध्यामन्यराजन्यप्रीतिप्रशमनो रथः ॥ ५४ ॥

यत्रासीद्रघुपतिरूपनिर्जितोऽसौ
वैलक्ष्यक्षतकृतसम्मदावसादः ।
लालाट्यज्वलनरयेण भूतभर्त्रा
नैरात्म्यं हृदयभुवः शिवाय सृष्टम् ॥ ५५ ॥

---

सर्वराजभिः त्यक्तत्वेन अवस्रसनं ज्ञेयम्। विवाहस्य परिणयनस्य यः परिलघः अवस्रसन तस्माज्जात 'पञ्चम्यामजातौ' इति जनेर्डः। शोक इति आख्या नाम यस्य एतादृशं हृदः शल्यं शङ्कुः 'स्वातं हृन्मानसं मनः' इत्यमरः। तस्य अस्तुकारेण करणं कारः भावे घञ् अस्तु इति कारः तेन सुप्सुपेति समासः। यथा वदसि तथास्तु इति अङ्गीकारेणेत्यर्थः। विपकर्ष आकृष्टवान् ॥ ५३ ॥

अथेति। अथ विवाहाङ्गीकारानन्तर दूतेन सेवकेन आस्थितः अधिष्ठितः अन्येषां इतरेषां राजन्यानां क्षत्रियाणां 'राजश्वशुराद्यत्' इति यत् 'ये चाभावकर्मणोः' इति प्रकृतिभावः। या प्रीतिः मुत् 'मुत् प्रीतिः प्रमदो हर्षः' इत्यमरः। तस्याः प्रशमनः नाशनः राजद्वयमनोरथः राज्ञोः विदेहदशरथयोः द्वयं द्वितयं तस्य मनोरथः मूर्तिमान् अभिलाष इव रथः स्यंदनः अयोध्यां साकेतं 'अथ साकेतमयोध्योत्तरकोसलाः' इति त्रिकाण्डशेषः। दशरथाह्वानार्थं दूताधिष्ठितो रथः अयोध्यां गत इत्यर्थः। अनुप्रासालंकारः ॥ ५४ ॥

यदिति। यत् यस्मात् कारणात् 'यत्तयतस्ततो हेतौ' इत्यमरः। रघूणां रघ्वपत्यानां पतिः अधिपतिः रामचन्द्रः। रघुशब्दः लक्षणया तदपत्येषु वर्तते। तस्य रूपं सौन्दर्यं 'रूप स्वभावे सौन्दर्ये' इत्यभिधानात्। तेन निर्जितः पराजितः असौ मदनः वैलक्ष्यस्य लज्जायाः क्षत आघातः तेन कृतः सम्मदस्य हर्षस्य 'प्रमोदामोदसम्मदाः' इत्यमरः। अवसादः नाशो यस्य। लज्जाघातकृतहर्षनाश इत्यर्थः। एतादृशः आसीत् अभूत् इत्यर्थः। तस्मात् भूतानां पिशाचादीनां भर्ता अधिपतिः शङ्करः तेन। शेषषष्ठ्या समासः। ललाटे भवः ललाट्यः तत्र भव इत्यधिकारे 'शरीरावयवाच्च' इति यत् ततः 'प्रज्ञादिभ्यश्च' इति स्वार्थेऽण्। लालाट्यः ललाटभवो यो ज्वलनः अग्निः तस्य रयेण वेगेन हृदये अन्तःकरणे भवतीति हृदयभूः 'क्विप् च' इति क्विप्। तस्य मदनस्येत्यर्थः। निर्गत आत्मा देहो यस्य स निरात्मा तस्य भावः नैरात्म्यं भावे ष्यञ्। अनङ्गत्वमित्यर्थः। शिवाय कल्याणाय सृष्टं उत्पादितम्। शिवायेति तादर्थ्ये चतुर्थी। निर्लज्जस्य नाश एव युक्त इति भावः। अनुप्रासालंकारः। प्रहर्षिणीवृत्तम्। तल्लक्षणं तु 'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्' इति ॥ ५५ ॥

पीनांसो नियतमुरस्तटो विशालः
क्षामं तद्व्यथयति मध्यमं शरीरम् ।
धात्रेति स्वयमनुचिन्त्य लम्बबाहु-
स्तम्भाभ्यां दृढमिव यन्त्रितोऽस्य देहः ॥ ५६ ॥
नेत्रान्ताधरकरपल्लवप्रभाभि-
स्तेनोष्णद्युतिकरकुङ्कुमानुलिप्तः ।
व्याकोशारुणवनजप्रभाविशेषो
निर्जित्याहित इव पादयोरधस्तात् ॥ ५७ ॥
ज्ञानं विलोचनमिति प्रथिते तदीये
नेत्रे उभे विमलवृत्तिगुणस्वभावे ।
एकं तयोः श्रुतिपथस्य समीपमात्रं
यातं प्रपन्नमखिलश्रुतिपारमन्यत् ॥ ५८ ॥

---

पीनांस इति । पीनौ पुष्टौ अंसौ यस्मिन् एतादृशः विशालः पृथुलः 'विशालं पृथुलं महत्' इत्यमरः । उरसः तटः प्रान्तः 'तट त्रिषु' इत्यमरात् तटस्य पुंस्त्वं तत् क्षामं कृशं 'क्षायो मः' इति निष्ठा तस्य मात्वं ऋद्धिस्थ देशः मध्यमं मध्यवर्ति 'मध्यान्मः' इति मप्रत्ययः । शरीरं देहः मध्यमस्य शरीरत्वाभावेपि अवयवे अवयवित्वविवक्षयाऽयं प्रयोगः । नियतं यथा तथा व्यथनक्रियायाः विशेषणमेतत् । व्यथयति पीडयति 'वर्तमानसामीप्ये' इत्यादिना वर्तमानसमीपे भविष्यति वा लट् । इति एवं प्रकारेण धात्रा ब्रह्मणा स्वयं अनुचिन्त्य स्वतो विचार्य लम्बौ बाहू एव स्तंभौ स्थूणे ताभ्यां अस्य श्रीरामभद्रस्य देहः शरीरं दृढं यथा तथा यन्त्रित इव स्तम्भित इवेति यावत् । यथा फलभारासहनस्य कदलीवृक्षादेः उपष्टम्भार्थं स्तम्भादि दीयते तद्वदित्यर्थः । अनेन आजानुबाहुत्वं वर्णितम् । उत्प्रेक्षालंकारः । प्रहर्षिणीवृत्तम् । लक्षणमुक्तम् ॥ ५६ ॥

नेत्रान्तेति । तेन रामेण उष्णा द्युतिः प्रकाशो यस्य एतादृशः सूर्यः तस्य ये करा: किरणाः तदेव कुङ्कुमं घुसृणं तेन अनुलिप्तः अथ च उष्णद्युतिना सूर्येण कराभ्यां करणेन कुङ्कुमेन उपलेपनसाधनभूतेन अनुलिप्तः एतादृशः । व्याकोशानि विकचानि 'व्याकोशविकचस्फुटाः' इत्यमरः । यानि अरुणवनजानि रक्तकमलानि तेषां यः प्रभाविशेषः कान्तिविशेषः । नेत्रयोः अंतः प्रान्तभागः अधरः अधरोष्ठः करपल्लवौ करकिसलये 'पल्लवोऽस्त्री किसलयं' इत्यमरः । तेषां प्रभाभिः निर्जित्य पादयोः चरणयोः अधस्तात् आहित इव स्थापित इव । यथा परसाहाय्यकेन वृद्धिंगतः शत्रुः स्वकीयैः अनेकसहायैः निर्जित्य पादाधोभागे निक्षिप्यते तद्वदित्यर्थः । स्वशोभया अरुणपद्मजयकारिणी तत्पादपद्मे इत्यर्थः । उत्प्रेक्षालंकारः । प्रहर्षिणीवृत्तम् ॥ ५७ ॥

ज्ञानमिति । तस्य रामभद्रस्य इमे तदीये 'त्यदादीनि च' इति वृद्धसंज्ञायां 'वृद्धाच्छः' इति छः । तत्संबन्धिनी इति यावत् । प्रथिते प्रसिद्धे विशाले च ।

इत्थं वराश्रयकथेषु जनेषु सीता
नम्रेण घर्मसलिलास्पदगण्डलेखा ।
तस्थौ मुखेन शशिनिर्मलदन्तकान्ति-
ज्योत्स्नानिषिक्तदशनच्छदपल्लवेन ॥ ५९ ॥

---

विमलवृत्तिगुणस्वभावे वृत्तेर्गुण. स च स्वभावश्च तयोकौ विमलौ वृत्तिगुणस्वभावौ ययोस्ते । विमलवृत्तिगुण ज्ञान विमलस्वभाव विलोचनमिति भाव. । एतादृशे एक ज्ञान अपर विलोचन इति उभे नेत्रे आस्तामिति शेषः तयोर्मध्ये एक अर्थात् विलोचन श्रुतेः कर्णस्य पथा. मार्गः तस्य ' ऋक्पूरब्धूः ' इत्यादिना अप्रत्यय समासान्तः । समीपमेव समीपमात्र मयूरव्यसकादित्वात् एवार्थेन मात्रशब्देन समास । यात प्राप्त ' गत्यर्थाकर्मकेति ' कर्तरि क. । अन्यत्तु अर्थात् ज्ञान अखिलाना श्रुतीना वेदाना पार अत प्रपन्न प्राप्तम् । श्लेषालङ्कारः । वसततिलकावृत्तम् । उक्त च ' उक्ता वसततिलका त भ जा ज गौ ग. ' इति ॥ ५८ ॥

इत्थमिति । जनेषु लोकेषु इत्थ पूर्वोक्तप्रकारेण ' इदम.स्थमु ' इति प्रकारे थमुप्रत्यय. । वरः श्रीरामभद्रः आश्रय. आलबन यासा ताः वराश्रयाः कथाः गोष्ठयो येषु एतादृशेषु सत्सु वरगुणवर्णनतत्परेषु इति यावत् । घर्मरूप यत्सलिल तस्य आस्पद स्थान गडलेखा गल्लरेखा यस्या. श्रमजघर्मबिंदुयुक्तजलेत्यर्थ. । एतादृशी सीता जानकी शशीव निर्मला. ये दंता. रदना. तेषा या कान्तिर्ज्योत्स्ना कान्तिचन्द्रिका तया निषिक्त. आर्द्रीकृत. मिश्र इति यावत् । एतादृशः दशनच्छदपल्लव ओष्ठपल्लवो यस्य ' ओष्ठाधरौ तु रदनच्छदौ ' इत्यमरः । स्मितकान्तियुताधरपल्लवेनेति यावत् । एतादृशेन नम्रेण मुखेन उपलक्षिता सती तस्थौ । वसततिलकावृत्तम् । लक्षण तूक्तम् ॥ ५९ ॥

इति श्रीपुनपदवाक्यप्रमाणपारावारीणमहामहोपाध्यायपदव्य-
लङ्कृतपण्डितप्रवरश्रीकरहाटकरोपनामकश्रीमद्गोपालाचा-
र्यान्तेवासिना निगुडकरोपाभिधेन नारायणशर्मणा
विरचितायां महोत्साहाख्यजानकीहरणका-
व्यटीकायां पञ्च. सर्गः समाप्तः ।

# सप्तमः सर्गः ।

ततो धरित्रीतनया गरीयः सा शासनं प्राप्य गुरोरलङ्घ्यम् ।
स्थपत्यशुद्धान्तजनैः परीता जगाम कर्तुं व्रतिनो नमस्याम् ॥ १ ॥
सुखेन नत्वा गजकुम्भपीनस्तनावरुद्धा चरणौ महर्षेः ।
तमेव भूयो भरमुद्वहन्ती समुन्ननाम प्रतिपद्य यत्नम् ॥ २ ॥

---

श्रीगणेशाय नमः ॥ अथ सीताविवाहं वर्णयितुं तदनुकूलत्वेन तां वर्णयितुमनाः गुरुजनानुज्ञया विश्वामित्रं नमस्कर्तुं सीतायानमुपक्षिपति—तत इति । चापभङ्गानन्तरं सा पूर्वोक्ता धरित्रीतनया धरित्र्याः पृथ्व्याः तनया । स्थपतौ कञ्चुकिनि साधवः स्थपत्याः 'तत्र साधुः' इति साध्वर्थे यत् । 'स्थपतिः कञ्चुकिनि प्रोक्तो भद्रे गुरुपदेऽपि च' इति त्रिकाण्डशेषः । कञ्चुकिनः रक्षणक्रियायां शुद्धान्तजनस्यैव सम्भवात् कञ्चुकिसाधुत्वं शुद्धान्तजनस्य इति यथाकथंचित् समाधेयम् । एतादृशैः शुद्धान्तजनैः अवरोधजनैः परीता वेष्टिता अनुगतेति यावत् । एतादृशी सीता गुरोः पितुः जनकस्य 'गुरुः गीष्पतिपित्राद्यो' इत्याद्यमरः । अतएव उल्लङ्घयितुं अर्हं लङ्घ्यं तथा नेति अलङ्घ्यं 'ऋहलोर्ण्यत्' इति ण्यत् । एतादृशं शासनं आज्ञां प्राप्य । व्रतं नियमः अस्यास्तीति व्रती 'नियमो व्रतमस्त्री तच्चोपवासादिपुण्यकम्' इत्यमरः । तस्य विश्वामित्रस्य 'षष्ठी शेषे' इत्यनेन षष्ठी । नमस्यां पूजां नमस्कारं इति यावत् । 'नमोवरिवश्चित्रङः क्यच्' इत्यनेन क्यजन्तात् नमःशब्दात् 'अ प्रत्ययात्' इत्यनेन अप्रत्ययः । कर्तुं विधातुं जगाम गम्धातोः लिट् । उपजातिवृत्तम् । 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति लक्षणात् ॥ १ ॥

सुखेनेति । गजस्य हस्तिनः कुम्भौ गण्डस्थले 'कुम्भौ घटेभमूर्धांशौ' इत्यमरः । ताविव पीनौ पुष्टौ यौ स्तनौ कुचौ ताभ्यां अवरुद्धा नम्रीकृता अर्थात् सा सीता इति प्रकरणाल्लभ्यते । महर्षेः विश्वामित्रस्य 'ऋषयः सत्यवचसः' इत्यमरः । चरणौ पादौ 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः । सुखेन अनायासेनेत्यर्थः । नत्वा नमस्कृत्य । तमेव पूर्वोक्तमेव स्तनसम्बन्धिनमित्यर्थः । भरं भारं उद्वहन्ती धारयन्ती । वहधातोः शत्रन्तात् ङीप् । भूयः प्रभूतं । भूयःशब्दः बाहुल्यवाचकः अव्ययमपि । अथवा भूयइति पुनरर्थे । अतएव 'इमानि तर्हि भूयस्तन्निमित्तग्रहणस्य प्रयोजनानि' इति भाष्ये 'भूयः पुनः' इति कैयटोव्याख्यत् । यत्नं आयासं प्रतिपद्य प्राप्य समुन्ननाम समुन्नता बभूव । स्तनयोर्गुरुत्वात् । नमनसमये स्तनभारेण झटिति नमनानुकूल्यं जातम् । उन्नमनसमये तु तयोः गुरुत्वादेव प्रयासः समजनीति भावः । अनेन स्तनयोर्गुरुत्वं सूचितम् । तेन च सुन्दरत्वं ध्वनितम् । उक्तं च वराहमिहिराचार्यैः 'मध्यं स्त्रियास्त्रिवलिनाथम

सत्यं यदस्याः प्रविभाव्यरागो दृष्टिप्रवेकः खलु कृष्णवर्त्मा ।
स्नेहेरितं तद्धनदोपमस्य धैर्येन्धनं तेन ददाह भर्तुः ॥ ३ ॥
विन्यस्तपीनस्तनहेमकुम्भा स्वेदाम्बुभिस्तद्धृदयोपकार्या ।
मनोभुवस्तत्प्रथमप्रवेशे सिक्ताऽपि नो तत्र रजः शशाम ॥ ४ ॥
तुष्टो नु भङ्गादविपन्नधाम्नः शैवस्य चापस्य सुबाहुशत्रुम् ।
स्मरस्तमालिङ्ग्य तया प्रयुक्तश्चक्रे विहस्तं नु विशालदृष्ट्या ॥ ५ ॥

---

रोमशं च वृत्तौ घनाववियमौ कठिनावुरस्यौ' इति। उपेंद्रवज्रावृत्तम्। 'उपेंद्रवज्रा जतजास्ततोगौ' इति लक्षणात् ॥ २ ॥

सत्यमिति । यत् यस्मात् कारणात् अस्याः सीतायाः प्रविभाव्य सुज्ञेयः रागः रक्तिमा यस्मिन् । प्रवि इति उपसर्गाभ्यां भूधातोः णिजंतात् यत्प्रत्ययः । एतादृशः दृष्टिप्रवेकः उत्तमा दृष्टिः दृष्टिप्रवेकः कृष्णवर्त्मा अग्निः 'वर्हिः शुष्मा कृष्णवर्त्मा' इत्यमरः। सत्यं खलु। तत् तस्मात् कारणात् दृष्टिप्रवेकस्य कृष्णवर्त्मत्वात् इत्यर्थः । तेन दृष्टिप्रवेकेन धनदः कुबेरः स उपमा उपमानं यस्य एतादृशस्य भर्तुः रामचंद्रस्य स्नेहेन प्रेम्णा ईरितं प्रेरितं अथ च स्नेहेन तैलेन ईरितं तद्विशिष्टमिति यावत् । धीरस्य भावो धैर्यं 'ब्राह्मणादित्वात् ष्यञ्' । तदेव इंधनं ददाह भस्मीचकार ॥ इंद्रवज्रावृत्तं तल्लक्षणं 'स्यादिंद्रवज्रा यदि तौ जगौ गः' इति । रूपकालंकारः ॥ ३ ॥

विन्यस्तेति । पीनौ पुष्टौ यौ स्तनौ तावेव हेमकुंभौ सुवर्णकलशौ विन्यस्तौ स्थापितौ पीनस्तनहेमकुंभौ यस्यां एतादृशी तद्धृदयोपकार्या तस्याः जानक्याः यत् हृदयं सैव उपकार्या राजसदनं 'सौधोऽस्त्री राजसदनमुपकार्योपकारिका' इत्यमरः॥ मनसि भवतीति मनोभूः । मन उपपदे भुवः क्विप्चेति क्विप् । तस्य मदनस्य । तत्प्रथमप्रवेशे प्रथमं पूर्वं प्रवेशः सुप्सुपेति समासः । तस्यां हृदयोपकार्यायां प्रथमप्रवेशः तस्मिन् स्वेदाम्बुभिः घर्मजलैः सिक्तापि आर्द्रीकृतापि तत्र हृदयोपकार्यायां रजः रजोगुणः पांसुश्च नो शशाम न शांतो बभूव । दीपकविरोधाभासावलंकारौ उपजातिवृत्तम् ॥ ४ ॥

तुष्ट इति । न विपन्नं नष्टं अविपन्नं तथा धाम प्रभावो यस्य तत् अविपन्नधाम तस्य अतिरोहितप्रभावस्य 'गृहदेहत्विट्प्रभावा धामानि' इत्यमरः। एतादृशस्य शैवस्य शिवस्य इदं शैवं तस्य चापस्य धनुषः भंगात् नाशात् तुष्टो नु संतुष्टो नु । सुबाहोः एतन्नामकराक्षसविशेषस्य शत्रुं अरिं तं रामं आलिंग्य । विशाला दृष्टिः नयनं यस्याः एतादृश्या तया सीतया प्रयुक्तः प्रेरितः नु स्मरः मदनः तं रामं विहस्तं व्याकुलं 'विहस्तव्याकुलौ समौ' इत्यमरः। चक्रे । निजशत्रोः शंकरस्य चापस्य भंक्तुः श्रीरामस्य सीताविशालदृष्टिप्रेरितः मदनः शृंगाररसानंदाविर्भावेण प्रत्युपकारं चक्रे इत्यर्थः । उत्प्रेक्षालंकारः । उपजातिवृत्तम् ॥ ५ ॥

विधातृमुख्यैरपि दृश्यरूपं रूपं निरूप्यार्द्धनिरीक्षितेन ।
एवं स गुण्यो गणयाम्बभूव भूम्ना मनस्वी मनसैव तस्याः ॥ ६ ॥
प्रसीद मैव परिभूदखण्ड ताराधिपं ते वदनामृतांशुः ।
इति प्रियायाः पतितेव पादे ताराततिर्दीप्तनखच्छलेन ॥ ७ ॥
क्लिष्टा नितान्तं कृशवृत्तिमध्यं मास्म च्छिनच्छ्रोणिरिति प्रचिन्त्य ।
गुर्वी तदूरुद्वयशातकुम्भस्तम्भद्वयेनेव धृता विधात्रा ॥ ८ ॥

---

विधात्रिति । विधाता ब्रह्मा मुख्यो येषां 'विधाता विश्वसृड्विधिः' इत्यमरः । तैरपि दृश्यरूपं द्रष्टुं योग्यं दृश्यं 'अर्हे कृत्यतृचश्चेति' अर्हेऽर्थे 'ऋदुपधाच्चा-क्लृपि' इत्यादिना क्यप्प्रत्ययः । प्रशस्तं दृश्यं दृश्यरूपं 'प्रशंसायां रूपप्' इत्यनेन रूपप्प्रत्ययः । एतादृशं रूपं अर्धनिरीक्षितेन । निरीक्षितस्य अर्धं इति 'अर्धं नपुंसकं' इति एकदेशिसमासः । भाष्यकृता तत्प्रत्याख्यानात् कर्मधारयो वा । निरूप्य अवलोक्येत्यर्थः । अर्धनिरीक्षणं च लज्जाहेतुत्वात् । गुण्यः प्रशस्ताः गुणाः यस्य स गुण्यः 'रूपादाहतप्रशंसयोर्यप्' इति सूत्रस्थेन 'अन्येभ्योऽपि दृश्यते' इति वार्तिकेन यप्प्रत्ययः । प्रशस्तं मनो यस्य स मनस्वी 'अस्मायामेधा' इत्यादिना विनिप्रत्ययः । स रामचन्द्रः तस्याः तत् रूपं सौंदर्यं 'रूपं स्वभावे सौंदर्ये' इत्यभिधानं ॥ भूम्ना बाहुल्येन बहुशः इत्यर्थः । मनसैव अन्तःकरणेनैव न तु दृष्ट्या इति एवकारो व्यवच्छेद्यः गणयाम्बभूव चिंतयामासेत्यर्थः । लज्जया निरीक्षणासंभवात् । एकदा अर्धनिरीक्षणेन तदवलोक्य अनंतरं केवलं मनसैव सस्मारेत्यर्थः । अनुप्रासालंकारः ॥ उपजातिः ॥ ६ ॥

रूपं मनसैव गणयाम्बभूवेत्युक्तं तदेव कतिपयैः श्लोकैः प्रपञ्चयति—प्रसीदेति । ते तव वदनमेव मुखमेव अमृतांशुः चंद्रः एव अखंडः नास्ति खंडः छेदो यस्य सः अखंडः परिपूर्णमित्यर्थः । ताराणां नक्षत्राणां अधिपः चंद्रः तं एव मापरिभूत पराभवं न करोतु 'माङि लुङ्' इति लुङ् सर्वलकारापवादत्वेन प्रार्थना लोड्विषयेऽपि भवति 'नमाङ्योगे' इत्यडागमनिषेधः । प्रसीद प्रसन्ना भव । प्रपूर्वात्सदेः प्रार्थनायां लोटि 'पाघ्राध्मा' इति सूत्रेण सीदादेशः । इति पूर्वोक्तप्रकारेण ताराणां नक्षत्राणां ततिः पंक्तिः दीप्तानि उज्ज्वलानि 'नमिकंपि' इत्यादिना ताच्छील्ये दीपेः रप्रत्ययः । यानि नखानि तेषां छलेन मिषेण 'छलं मिषं च वैदग्धी' इति त्रिकाण्डशेषः । प्रियायाः जानक्याः पादे चरणे 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः । पतितेव । उत्प्रेक्षालंकारः ॥ उपजातिवृत्तम् ॥ ७ ॥

क्लिष्टेति । विधात्रा ब्रह्मणा श्रोणिः कटिः कृशा वृत्तिः वर्तनं यस्य । कृश-स्वरूप इत्यर्थः । एतादृशो यो मध्यः मध्यभागः तं नितांतं अत्यंतं क्लिष्टा भारेण प्रभिद्य मास्म छिनत् न छिनत्तु । अत्रापि पूर्ववदेव लुङ् । इति प्रचिन्त्य विचार्य गुर्वी अर्थात् श्रोणिरिति विशेष्यम् । तस्याः सीतायाः यदूरुद्वयं तदेव शातकुम्भस्य सुवर्णस्य स्तंभद्वयं स्थूणाद्वयं तेन धृतेव आरचितेवेत्यर्थः ।

तदस्तु सोष्मं कठिनं प्रकृत्या तनोति तापं स्तनयोर्द्वयं यत् ।
मध्यस्थमप्येतदनित्यवृत्तेर्वलित्रयं मां दहतीति चित्रम् ॥ ९ ॥
स्तनौ नु कुम्भप्रतिमौ सुदत्या निःशेषवक्षस्तटबद्धबिम्बौ ।
पिण्डौ नु पीनौ नवयौवनस्य न्यस्तौ शरीरादतिरिक्तवन्तौ ॥ १० ॥
विभाति तन्व्या नवरोमराजिः शरीरजन्मानलधूमरेखा ।
अन्योन्यबाधिस्तनमण्डलस्य मध्यस्य धात्रा विहितेव सीमा ॥ ११ ॥

---

यथा किंचित् स्थूलं काष्ठं उपरितनं गृहभारं वोढुमनर्हं गृहभारधारणार्थं अधः स्तम्भद्वयेन अवष्टभ्यते तद्वत् इत्यर्थः । उत्प्रेक्षालंकारः । इन्द्रवज्रावृत्तम् ॥ ८ ॥

तदिति । अनित्यवृत्तेः न नित्या गर्ह्या अनित्या 'णिदि कुत्सायां' 'ऋहलोर्ण्यत्' इति ण्यत् । अनित्या वृत्तिः वर्तनं यस्याः शुद्धाचरणायाः सीताया इत्यर्थः । प्रकृत्या स्वभावेन यत् सोष्मं उष्मत्वसहितं आतपसहितं च 'ऊष्मातपनिदाघयोः' इति योवालितः । कठिनं दृढं कठोरस्वभावं च एतादृशं स्तनयोः कुचयोः द्वयं तापं स्मरजतापं दुःखं च तनोति विस्तारयति तत् अस्तु तिष्ठतु इत्यर्थः । दुष्टस्वभावः तापं करोति चेत् नाश्चर्यमित्यर्थः । किं तर्हि आश्चर्यकरमित्यत आह—मध्यस्थमिति । मध्ये मध्यभागे तिष्ठतीति मध्यस्थं 'सुपि' इति योगविभागात् कप्रत्ययः । मध्यस्थं मध्यभागावस्थितं निःपक्षपातं च एतादृशं एतत्समीपवर्ति वलीनां त्रयं त्रिवलयमपि मां रामं दहति इति चित्रं आश्चर्यम् । श्लेषालंकारः ॥ उपेन्द्रवज्रावृत्तम् । लक्षणं तूक्तम् ॥ ९ ॥

स्तनाविति । शोभनाः दन्ताः यस्याः सा सुदती 'वयसि दन्तस्य दतृ' इत्यनेन दत्रादेशः 'उगितश्च' इति ङीप् । तस्याः सीतायाः । कुम्भौ कलशौ प्रतिमे उपमे ययोस्तौ 'प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया' इत्यमरः । कलशतुल्यौ इत्यर्थः । स्तनौ निःशेषं सकलं यद्वक्षस्तटं तत्र बद्धे प्रतिबद्धे बिम्बे ययोस्तौ सकलवक्षस्तटव्यापिनौ नु इत्यर्थः । अथवा द्वितीयामुत्प्रेक्षामाह । शरीरात् ल्यब्लोपे पञ्चमी । शरीरं व्याप्य अतिरिक्तवन्तौ अतएव न्यस्तौ विधात्रेति शेषः । नवं यद्यौवनं तारुण्यं 'तारुण्यं यौवनं समे' इत्यमरः । तस्य पीनौ स्थूलौ पिण्डौ गोलकौ नु सर्वशरीरं व्याप्य अवशिष्टौ तारुण्यगोलकौ इति यावत् । उत्प्रेक्षालंकारः ॥ उपजातिवृत्तम् ॥ १० ॥

विभातीति । शरीराज्जन्म यस्य स शरीरजन्मा मदनः स एव अनलः अग्निः तस्य धूमरेखा धूमपङ्क्तिः । तन्व्याः सीतायाः नवा नवीना रोम्णां लोम्नां राजिः पङ्क्तिः अन्योन्यं परस्परं बाधते तत् अन्योन्यबाधि 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः । एतादृशं यत् स्तनमण्डलं स्तनचक्रवालं 'चक्रवालं तु मण्डलम्' इत्यमरः । तस्य तत्सबन्धी यो मध्यः मध्यभागः तस्य धात्रा ब्रह्मणा

यात्यङ्गदोऽप्येव विवृद्धदीप्तिरनङ्गदत्वं न्यसनेन यत्र ।
तथाहि शक्तिर्मदनस्य दाने चारुप्रकोष्ठस्य भुजद्वयस्य ॥ १२ ॥
यद्वक्त्रेन्दुलीलामनुयातुमस्याः कलान्तराणि प्रतिपद्य चन्द्रः ।
पूर्णोऽपि साधर्म्यविशेषशून्यः क्रमेण शोकादिव याति हानिम् ॥१३॥
मृगाङ्गनानां नयनानि पूर्वं विधाय नीलानि च नीरजानि ।
कृतप्रयोगेण पुनर्विधात्रा सृष्टं नु नेत्रद्वयमायताक्ष्याः ॥ १४ ॥

---

विहिता निर्मिता सीमेव मर्यादेव विभाति शोभते । यथा क्षेत्रविषये परस्पर कलहं कुर्वतोः द्वयोः कलहनिरसनार्थं क्षेत्रमध्ये यथा सीमा क्रियते तद्वदित्यर्थः । उत्प्रेक्षा रूपकं च । उपजातिवृत्तम् ॥ ११ ॥

यातीति । भुजद्वये विवृद्धा दीप्तिः कान्तिर्यस्य 'स्युः प्रभा रुग् रुचिस्त्विड् भा भाश्छविद्युतिदीप्तयः' इत्यमरः । एतादृशः एषः समीपवर्ती अङ्गदोपि केयूरमपि 'केयूरमङ्गदं तुल्ये' इत्यमरः । अत्र अङ्गदस्य पुंस्त्वं विचारणीयम् । यत्र यस्मिन् भुजयुगे न्यसनेन स्थापनेन अनङ्गदत्वं अङ्गदभिन्नत्वं मदनदातृत्वं च याति प्राप्नोति । चारुः प्रकोष्ठो यस्य एतादृशस्य भुजद्वयस्य बाह्वोः द्वितयस्य । मदनस्य मन्मथस्य दाने तथाहि तादृशीत्यर्थः । शक्तिः सामर्थ्यं अस्तीति शेषः । यत्र धृतेन अङ्गदमपि मदनदातृ भवति सा शक्तिः भुजद्वयस्य नान्यत्रेत्यर्थः ॥ उपजातिवृत्तम् ॥ १२ ॥

वक्त्रेन्द्विति । चन्द्रः चदि आह्लादे 'स्फायितञ्चीत्यादिना' रक् प्रत्ययः । अस्याः सीतायाः वक्त्रं मुखमेव इन्दुः चन्द्रमाः तस्य लीलां शोभामित्यर्थः । अनुयातुं अनुकर्तुं अस्याः कलाः कलान्तराणि अन्यषोडशभागान् 'कला तु षोडशो भागः' इत्यमरः । प्रतु-परिकलाः । मयूरव्यंसकादित्वात्समासः प्रतिपद्य प्राप्य प्रतिपूर्वात्पद्धातोः क्त्वा प्रत्ययः 'समासे नञ्पूर्वे क्त्वो ल्यप्' इत्यनेन ल्यबादेशः । पूर्णोपि संपूर्णोपि समानः धर्मो यस्य स सधर्मा 'धर्मादनिच् केवलात्' इति अनिच् प्रत्ययः समासान्तः । तस्य भावः साधर्म्यं 'ब्राह्मणादित्वात् ष्यञ्' तस्य यो विशेषः अतिशयः तेन शून्यः विरहितः सन् क्रमेण एकैककलाक्रमेण शोकादिव मुखसाधर्म्यालाभशोकादिव हानिं नाशं याति प्राप्नोति । रूपकोत्प्रेक्षासमतीपालंकाराः । उपजातिवृत्तम् ॥ १३ ॥

मृगाङ्गनेति । पूर्वं प्रथमं क्रियाविशेषणमेतत् । विधात्रा ब्रह्मणा मृगाणां हरिणानां अङ्गनाः स्त्रियः तासां नयनानि नेत्राणि विधाय कृत्वा च नीलानि नीलवर्णविशिष्टानि वर्णवाचिनीलशब्दात् विहितस्य मतुपः 'गुणवचनेभ्यो मतुपो लुगिष्टः' इत्यनेन लुक् । एतादृशानि नीरात् उदकात् अजनिषत इति नीरजानि 'अन्येष्वपि दृश्यते' इति डप्रत्ययः 'उपपदमतिङ्' इत्यनेन

अन्वेति कान्त्या कमनीयमस्या युग्मं भ्रुवोरायतनेत्रलेखम् ।
रोषेण कृत्तस्य हरेण मध्ये च्छेदद्वयं मन्मथकार्मुकस्य ॥ १५ ॥
असर्पतामापतितालकान्तपर्यन्तकान्तिश्रुतिमूलमस्याः ।
भ्रुवौ नु वक्तुं तरलत्वमक्ष्णोर्भ्रूयुग्मकौटिल्यमिमे नु दृष्टी ॥ १६ ॥
तन्व्या मनोज्ञस्वरनैपुणेन विनिर्जितो रोषविलोहिताक्षः ।
प्रसक्तचिन्ताहितमन्यपुष्टः शोकेन कार्ष्ण्यं वहतीति मन्ये ॥ १७ ॥

---

समासः। कमलानि विधाय कृत्वा इति कृतप्रयोगेण कृतः प्रयोगो येन एतादृशेन अर्थात् विधात्रैव पुनः आयते विस्तृते अक्षिणी नेत्रे यस्याः सीतायाः 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' इत्यनेन षच् प्रत्ययः समासान्तः, षित्वात् ङीष्। नेत्रयोः द्वयं द्वितयं सृष्टं नु उत्पादितं नु इत्यर्थः। यथा कश्चन नटादिः आत्मप्रत्ययार्थं पूर्वं नाट्यं विधाय अनन्तरं प्रेक्षकपुरतः करोति तद्व-दित्यर्थः। उत्प्रेक्षालंकारः ॥ उपजातिः ॥ १४ ॥

अन्वेतीति। अस्याः सीतायाः आयते विस्तृते नेत्रे च लेखे यस्य तत् त्रिपदबहुव्रीहिः। एतादृशं कमनीयं सुंदरं भ्रुवोः भ्रुकुट्योः युग्मं युगुलं कान्त्या हरेण शंकरेण रोषेण क्रोधेन मध्ये मध्यभागे कृत्तस्य छिन्नस्य कर्मणे प्रभव-तीति कार्मुकं 'कर्मण उकञ्' इति उकञ् प्रत्ययः। मन्मथस्य मदनस्य कार्मुकं धनुः तस्य छेदयोः खंडयोः द्वयं द्वितयं अन्वेति अनुकरोतीत्यर्थः। अत्रोपमानो-पमेयभावः आर्थिकः अतएव आर्थी उपमेयम् ॥ इन्द्रवज्रावृत्तम् ॥ १५ ॥

असर्पतामिति। अस्याः सीतायाः आपतिताः प्राप्ताः अलकानां केशानां अंतः समीपभागः तत्पर्यंतं कांतिर्यस्य अथवा आपतिताः ये अलकांताः केशा-ग्राणि तैः पर्यंतः समततः कांतिर्यस्य एतादृशं श्रुत्योः कर्णयोः मूलं भ्रुवौ भृकुटी अक्ष्णोः नेत्रयोः तरलत्वं चपलत्वं वक्तुं नु असर्पतां अगमताम्। इमे दृष्टी भ्रूयुग्मस्य कौटिल्यं कुटिलत्वं वक्तुं नु असर्पताम् ॥ उत्प्रेक्षादीपकाल-ङ्कारौ ॥ उपजातिवृत्तम् ॥ १६ ॥

तन्व्या इति। तन्व्याः सीतायाः मनोज्ञः मंजुलः यः स्वरः ध्वनिः 'मनोज्ञं मंजु मंजुलं' इत्यमरः। तत्र यन्नैपुणं कौशलं 'युवादित्वात्' अण्प्रत्ययः। विनिर्जितः पराभूतः अतएव रोषेण अमर्षेण 'कोपक्रोधामर्षरोषाः' इत्यमरः। विलोहिते रक्ते अक्षिणी यस्य 'बहुव्रीहौ स्वाङ्गात् षच्' इत्यनेन समासांतः षच्। एतादृशः अन्यपुष्टः अन्यैःकाकादिभिः पुष्टःकोकिलः 'वनप्रियः परभृतः' इत्यमरः। शोकेन सीतास्वरनैपुणपराभवशोकेन प्रसक्ता सलग्ना प्रसक्तेति यावत्-या चिंता तया आहितं स्थापितं, प्रापितमित्यर्थः। एतादृशं यत्कार्ष्ण्यं कृष्णस्य भावः 'गुणवचनब्राह्मणादिभ्यः' इति भावे ष्यञ्। तत् वहति धारयति इति मन्ये, जाना-मीत्यर्थः। मनु ज्ञाने लट्। कोकिलस्य कार्ष्ण्यं न स्वतः किंतु सीतास्वरनैपुण-

पुष्पायुधः स्वात्मनि शस्त्रपातान् कुर्वीत सीताकृति वीक्ष्य रत्नम् ।
चिर्नीयते तन्न यदात्मयोनेस्तीव्रा मयि व्यापृतिरायुधानाम् ॥ १८ ॥
सति स्म तस्यातिगुरुप्रतर्के चेतस्यथ प्राह मुनिं नरेन्द्रः ।
प्रणम्य शुद्धान्तमुपैति पादौ तीर्थादनूनौ भवतः स्नुषेति ॥ १९ ॥
कलत्रभारेण कुचद्वयस्य स्थाम्ना तथा मन्थरविक्रमायाः ।
आसीत्स तस्या गतिमन्थरत्वेऽसौ राजपुत्रोऽपि तृतीयहेतुः ॥ २० ॥

---

जनितपराभवोत्पन्नचिताभाव वैवर्ण्य इति मन्ये इत्यर्थः । उत्प्रेक्षालङ्कारः उपजातिवृत्तम् ॥ १७ ॥

पुष्पायुध इति । आत्मा अन्तःकरणं योनिः कारणं यस्य स मनोभव इत्यर्थः । 'आत्मयोनिः पुमान् कामदेवे च परमेष्ठिनि' इति मेदिनी । तस्य मदनस्य मयि रामचन्द्रे तीव्रा तीक्ष्णा आयुधानां शस्त्राणां व्यापृतिः व्यापारः प्रहारः इत्यर्थः । तत् मद्विषयप्रहारकरणं न चिर्नीयते नाश्चर्यकारकमित्यर्थः । 'नमो-वरिवश्चित्रङः क्यच्' इत्यनेन क्यचि आत्मनेपदम् । यस्य पुष्पाणि तानि च 'अरविंदमशोकं च चूतं च नवमल्लिका ॥ नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः' इति आयुधानि यस्य स पुष्पायुधः मदनः । सीता एव आकृतिः आकारो यस्य तत् सीताकृति सीतास्वरूपमित्यर्थः । रत्नं वीक्ष्य अवलोक्य स्वात्मनि स्वस्य आत्मा शरीरं तस्मिन् स्वदेहे इत्यर्थः । शस्त्राणां पाताः तान् कुर्वीत सम्भावनायां लिङ् । इन्द्रवज्रावृत्तम् ॥ १८ ॥

सतीति । तस्य रामचन्द्रस्य चेतसि अन्तःकरणे अतिशयितः गुरुः प्रतर्को यस्मिन् एतादृशे सति, अनेकविधतर्कं कुर्वति सतीत्यर्थः । नराणां इन्द्रः जनकः । अथ पूर्वोक्तप्रकारानन्तरं मुनिं विश्वामित्रं इति प्राह स्म उवाचेत्यर्थः । स्मेति अतीतकालबोधक अथवा पादपूरणार्थं 'स्मातीतेऽरसमदर्शने' 'तु हि च स्म ह वै पादपूरणे' इत्युभयत्राप्यमरः । नरेन्द्रः मुनिं प्राहेत्युक्तं तत्र किं प्राहेत्यत आह— भवतः स्नुषा सीता दशरथसखित्वात् रामस्य यज्ञातिपालनार्थविद्यादानेन गुरुत्वाच्च विश्वामित्रस्य श्वशुरत्वं बोद्धव्यम् । तीर्थात् ऋषिजुष्टजलात् 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु ॥ अवतारर्षिजुष्टाम्भःस्त्रीरजःसु च विश्रुतम्' इत्यभिधानात् । अनूनौ अन्यूनौ तीर्थतुल्यौ इत्यर्थः । पादौ अर्थात् भवत इति गम्यते । अथवा भवतः पादौ इत्यन्वयः । स्नुषेत्यत्र भवत इति आर्थिकलब्धम् । प्रणम्य नमस्कृत्य । शुद्धान्तं अवरोधं 'शुद्धान्तश्चावरोधश्च' इत्यमरः । उपैति प्राप्स्यति । उपपूर्वकात् इण् धातोः वर्तमानसामीप्ये लट् ॥ उपजातिवृत्तम् ॥ १९ ॥

कलत्रेति । कलत्रस्य श्रोणीप्रदेशस्य यो भारः तेन 'कलत्रं श्रोणिभार्ययोः' इत्यमरः । तथा कलत्रभारेण कुचयोः स्तनयोः यत् द्वयं द्वितयं तस्य स्थाम्ना बलेन 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु ॥ ... स्थाम शुष्मं च' इत्यमरः । कुचद्वयभारेण इति फलितं । मन्थरः

अनुव्रजन्तं परिवारवर्गं प्रत्याहरन्ती किल नाम किञ्चित् ।
तिर्यग्विवृत्ताननचन्द्रबिम्बा रामं जघानार्धनिरीक्षितेन ॥ २१ ॥
तस्यां गतायां सह राघवाभ्यां भर्ता भुवः संयमिनं ततस्तम् ।
द्रष्टुं निनाय स्वयमृद्धिसारं सत्रस्य विप्रैरकृशं ततस्य ॥ २२ ॥

---

मदः विक्रमः पादप्रक्षेपो यस्याः मद्गतेरित्यर्थः । तस्याः सीतायाः गतेः गमनस्य मन्थरत्व मदत्वं तद्विषये सः प्रसिद्धः असौ राजपुत्रोऽपि दशरथपुत्रोऽपि रामचन्द्रोऽपि । तृतीयः त्रयाणां पूरणः एतादृशः हेतुः कारण 'त्रेः सम्प्रसारणं च' इति त्रिशब्दात्तीयप्रत्यय. सम्प्रसारण च । आसीत् । रामवियोगासहिष्णुत्वेन तद्गतिमदत्वे कलभकुचभारवत् रामोऽपि तृतीयः हेतुरासीदित्यर्थः । उपजातिवृत्तम् ॥ २० ॥

अनुव्रजन्तमिति । अनु व्रजतीति अनुव्रजन् त अनुपूर्वकात् व्रजगतावित्यस्मात् लटः शत्रादेश. । एतादृश परिवाराणा परिजनानां वर्गः समूहः 'परिवारः परिजने खड्गकोशे परिच्छदे' इति मेदिनी । 'वृन्दभेदाः समैर्वर्ग.' इत्यमरः । त किंचित् नाम शब्दरूप प्रत्याहरन्ती भाषमाणा किलेति सभावनायां अथवा किंचित् प्रत्याहरन्ती इत्येवान्वयः नामेति प्राकाश्ये प्रसिद्धावित्यर्थ । 'नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च । सभाव्य कुत्साप्राकाश्यविकल्पेऽपि च दृश्यते' इति मेदिनी । अत्र प्रत्याङ्पूर्वः हृधातुः उपसर्गवशादिना भाषणार्थ. कवेरभिप्रेतः तेन 'अकथित च' इति द्विकर्मकत्वम् । आननमेव चन्द्रबिंब तिर्यक् विवृत्त प्रचलित आननचन्द्रबिंब यया एतादृशी अर्थात् सीता । अर्ध यत् निरीक्षित अवलोकित तेन । अत्र समांशवाच्यर्धशब्दाभावात् कर्मधारय एव समासः । अपि च यथोत्तरमुनीना प्रामाण्येन एकदेशिसमासप्रत्याख्यातभाष्यमते सुतरा कर्मधारय एव । 'राम जघान' अत्र हनिस्ताडनार्थः । अत्र ताडन हन्तेरप्रसिद्धार्थत्वेन काव्ये दोष इति चेत् हिंसार्थक एवास्तु । अतितु समेव हिंसाऽत्र विवक्षिता । स्पष्ट चेद् भक्षेर्हिंसार्थस्य नेति शेखरे भक्षयति बलीवर्दान् सस्यमित्युदाहरणे क्षेत्रस्थानां सस्याना भक्षणे स्वामिनोऽत्र हिंसा द्रष्टव्या इत्यनेन पंथेनेति दिक् । उपजातिवृत्तम् ॥ २१ ॥

तस्यामिति । तस्या सीताया गतायां अन्तःपुरे इति शेषः । ततः सीतागमनानंतर भुव पृथिव्याः भर्ता पालकः जनकः स्वय रघोः गोत्रापत्ये राघवौ ताभ्यां 'तस्यापत्य' इत्यण् । रामलक्ष्मणाभ्यां सह त पूर्वोक्त संयमः इन्द्रियनिग्रहः सोऽस्यास्तीति सयमी त 'यमः समुपनिविषु च' इति सपूर्वात् यमधातोरप् प्रत्यय. । तस्मात् 'अतइनिठनौ' इति इनि. । विप्रैः ब्राह्मणैः ततस्य विस्तृतस्य सत्रस्य यज्ञविशेषस्य 'सत्रमाच्छादने यज्ञे' इत्यमरः । अकृशा अतिशयित ऋद्धेः समृद्धेः सार स्थिरांश द्रष्टुं अवलोकितु निनाय नीञ् प्रापणे लिट् । इन्द्रवज्रावृत्तम् । लक्षण तूक्तम् ॥ २२ ॥

दूरेऽपि देहेन वियोगवह्निः प्रवर्धिताधिः स्फुटतीति भीतः ।
तद्रक्षणायैव कृतप्रयत्नो रामो न तस्या हृदयं मुमोच ॥ २३ ॥
याते च रामे नयनाभिरामे दृष्ट्वा दिशः किं फलमस्ति शून्याः ।
इतीव पद्मायतलोचनाया विलोचने नेत्रजलं रुरोध ॥ २४ ॥
कृतेऽपि पाणिग्रहणे मयेयं जाता परत्राहितरागवृत्तिः ।
बालेति तस्या वलयं कृशाङ्ग्याः ससर्ज रोषेण यथा कराग्रम् ॥२५॥
सन्तापवह्निर्हृदि सम्नताङ्ग्याः कामाहितः स्वेदविलोहितेन ।
नेत्रद्वयेनेव बहिःप्रवृत्तज्वालावलिः संविविदे सखीभिः ॥ २६ ॥

---

दूरेपीति । देहेन शरीरेण दूरेपि वियोग एव वह्निः तस्मात् हेतोः स्फुटति स्फुटिष्यतीत्यर्थः । वर्तमानसमीपे भविष्यति लट् । अत्र स्फोटनक्रियायाः सीताहृदयं कर्तृ । इति भीतः अतएव प्रवर्धितः आधिः मनोव्यथा यस्य सः तस्य हृदयस्य रक्षणाय कृतः प्रयत्नः तत्र स्थितिरूपः येन स रामः तस्याः सीतायाः हृदयं अन्तःकरणं न मुमोच न त्यक्तवान् । सीता निरंतरं रामचंद्रगतमनस्का आसीत् इत्यर्थः । उपजातिवृत्तम् ॥ २३ ॥

यात इति । नयनयोः अभिरामे मनोहरे रामे रामचंद्रे याते गते सति । चकारः पादपूरणे । शून्याः रामदर्शनाभावात् उद्वेगकारिका इत्यर्थः । दिशः काष्ठाः दृष्ट्वा विलोक्य किं फलमस्ति न किमपीत्यर्थः । इतीव इति हेतोरिव पद्मे कमले इव आयते विस्तीर्णे लोचने नेत्रे यस्याः एतादृश्याः सीतायाः विलोचने नयने नेत्रजलं अश्रु रुरोध रुधृधातोर्लिट् । रामदर्शनशून्यं दिग्विलोकनं व्यर्थं इतीव नेत्रजलं दृशौ रुरोध रामवियोगेन सीताया नेत्रे अश्रुपरुद्धे । उत्प्रेक्षालंकारः । उपजातिवृत्तम् ॥ २४ ॥

कृतेपीति । मया पाणेः ग्रहणं स्वीकारः तत्र स्थितिरित्यर्थः । पक्षे पाणिग्रहणं विवाहः '–उपयामः पाणिपीडनं ' इत्यमरः । तस्मिन् कृतेपि आधर्मिष्ठा परत्र यस्मिन् परपुरुषे भगवति रामचंद्रे अथ च अविवाहिते पुरुषे आहिता स्थापिता रागेण प्रेम्णा वृत्तिः वर्तनं यया । इयं बाला । अल्पानि शेषः । इति हेतोः कृशं अङ्गं यस्याः सा कृशाङ्गी ' अङ्गगात्रकण्ठेभ्यो वक्तव्यं ' इति ङीष् । तस्याः सीतायाः वलयं कङ्कणं करस्य हस्तस्य अग्रं यथा यथावत् रोषेण ससर्ज तत्याज । रामवियोगजनितकृशत्वेन सीताहस्तात् कंकणानि गलितानीत्यर्थः । उपजातिवृत्तम् ॥ २५ ॥

सन्तापवह्निरिति । सम्नतानि अंगानि यस्याः सीतायाः हृदि अंतःकरणे कामेन मदनेन आहितः स्थापितः सन्ताप एव आधिः वह्निः स्वेदेन दुःखेन विलोहितं रक्तं तेन नेत्रयोः द्वयं द्वितयं तेन बहिः प्रवृत्ता याता ज्वालानां

याता नु सा तानवमङ्गजाग्नितप्ते चिरं तद्धृदये निवासात् ।
उत स्वकीये हृदि तं निविष्टमूढ्वा तनुत्वं श्रमजं गता नु ॥ २७ ॥
दूरेऽपि रामः परिकल्पवृत्त्या किं दृश्यतेऽस्मिन्नथवा स्थितेऽपि ।
किं मे प्रवासः प्रतिभाति पापादित्यास तस्या विविधो विकल्पः ॥ २८ ॥
मृदुप्रवालास्तरणेऽपि तन्वी शिलातले नैव धृतिं सिषेवे ।
असृक्स्रवार्द्रे शरतल्पमध्ये सा पुष्पकेतोरिव वर्तमाना ॥ २९ ॥

---

आवलिः पङ्क्तिर्यस्य एतादृशा इव सखीभिः आलिभिः सविविदे ज्ञातः । विद् ज्ञाने कर्मणि लिट् । उत्प्रेक्षालङ्कारः । इन्द्रवज्रावृत्तम् ॥ २६ ॥

यातेति । सा सीता अगात् अजनीत्यंगजः मदनः स एव अग्निः अथवा सीताविरहजातापः स एव अग्निः तेन तप्ते तस्य रामस्य हृदये अंतःकरणे चिरं चिरकाल निवासात् हेतोः तनोः कृशस्य भावः तानव कार्श्यम् 'इगताच्च लघुपूर्वात्' इतिभावेऽण् । याता नु प्राप्ता नु उत अथवा स्वकीये स्वस्य इद स्वकीय गृहादित्वाच्छप्रत्यये स्वस्य चेत्यनेन कुगागमः । हृदि अंतःकरणे निविष्ट स्थित स रामचंद्र ऊढ्वा धृत्वा । श्रमज श्रमात् अजनीति श्रमज । तनोः कृशस्य भावः तनुत्व कृशत्व 'तस्य भावस्त्वतलौ' इति त्वप्रत्ययः । गता नु । महापुरुषधारणे हि अबलायाः श्रमः आवश्यक एवेति तात्पर्यम् । अत्र उत्प्रेक्षालंकारमूलकः संदेहालंकारः । अतः उत्प्रेक्षासंदेहयोरंगांगीभावः संकरः । उपजाति-वृत्तम् ॥ २७ ॥

दूरेपीति । दूरेपि दूरस्थेपीत्यर्थः । रामः परिकल्पः संकल्पः तद्रूपा या वृत्तिः चित्तवृत्तिः मया दृश्यते किं रामचंद्रे दूरेपि तन्मनस्कतया कल्पितान करणवृत्त्या समीप भाति किं इत्यर्थः । अथवा अस्मिन् रामचंद्रे स्थितेपि मे पापात् प्रवासः प्रतिभाति इति तस्याः सीतायाः विविधः अनेकप्रकारकः विकल्पः कल्पना आस 'अस् गतिदीप्त्यादानेषु' इत्यस्य लिटि णलि रूपम् । धातूनाम-नेकार्थत्वात् सत्तार्थत्वम् । न च 'अस् भुवि' इत्यस्य शंक्य भ्वादेशेन इष्टरूपा-सिद्धेरिति दिक् ॥ संदेहालंकारः । इंद्रवज्रावृत्तम् ॥ २८ ॥

मृदुप्रवालेति । असृजः रक्तस्य यः स्रवः स्रवणं तेन आर्द्रे एतादृशे पुष्प-केतोः मदनस्य 'प्रद्युम्नः श्रीनंदनश्च कंदर्पः पुष्पकेतनः' इति हैमः । शराणां बाणानां तल्पं शय्या तस्य मध्ये वर्तमाना इव सा तन्वी सीता मृदवः ये प्रवालाः अंकुराः ते एव आस्तरणं यस्मिन् एतादृशे शिलातलेपि धृतिं संतोषं सुखमित्यर्थः । नैव सिषेवे नैव प्रापेत्यर्थः । मदनदाहकांतत्वात् शीतोपचारै-रपि सुखं न प्रापेत्यर्थः । अत्र सुखकारणसत्वेपि सुखरूपकार्यानुत्पत्तिवर्णनात् विशेषोक्त्यलंकारः । 'कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे' इति लक्ष-णात् ॥ उपजातिवृत्तम् ॥ २९ ॥

तुषाररश्मेरुदयेऽपि तस्या नेत्रोत्पलं नो मुकुलीबभूव ।
चन्द्रे मुखच्छद्मनि दीर्घकालमभ्यासतो नु प्रियचिन्तया नु ॥ ३० ॥
सशीकरं गर्भदलं कदल्या न्यस्तं नताङ्ग्या हृदये सखीभिः ।
बबन्ध भिन्नस्फटिकावदातं पुष्पेषुबाणव्रणपट्टशोभाम् ॥ ३१ ॥
कस्यापि दृष्ट्या मयि यद्विरागः स्वपादसेवाभिरतेऽपि न किम् ।
इतीव शैथिल्यमतानि तस्या युग्मेन सन्नूपुरयोरमन्दम् ॥ ३२ ॥

---

तुषारेति । तुषाराः शीतलाः रश्मयः किरणाः यस्य स तुषाररश्मिः । "तुषारः शीतलः शीतः" 'गभस्तिघृणिरश्मयः' इत्यमरः। तस्य चन्द्रस्य उदयेऽपि तस्याः सीतायाः नेत्रमेव उत्पलं कमलं न मुकुलीबभूव न कुड्मलीबभूवेत्यर्थः। मुकुलीभवनाभावे हेतुमुत्प्रेक्षते । मुखं छद्म यस्य तस्मिन् मुखरूपे इत्यर्थः। चन्द्रे दीर्घकालं दीर्घसमयं अभ्यासतो नु अभ्यासान्नु । अथवा प्रियस्य रामचन्द्रस्य चिन्तया। नु इति वितर्के । मुखचन्द्रस्य निरन्तरसाहचर्येण नेत्रोत्पलस्य कुड्मलीभावाभावः । वैरिणः दीर्घकालसाहचर्ये अनायत्या धैर्यावष्टम्भेन तत्कृतापकारः सह्यते ॥ उत्प्रेक्षालंकारः । उपजातिवृत्तम् ॥ ३० ॥

सशीकरमिति । नतानि अंगानि यस्याः सा नताङ्गी "अंगगात्रकण्ठेभ्य" इति ङीप् । तस्याः अतिपेलवाङ्ग्याः सीतायाः हृदये सखीभिः आलीभिः न्यस्तं स्थापितं शीकरैः तुषारैः सहितं सशीकरं 'शीकरोऽम्बुकणाः स्मृताः' इत्यमरः । भिन्नः विदीर्णः यः स्फटिकः मणिविशेषः तद्वदवदातं सितं कदल्याः रम्भायाः 'कदली वारणबुसा रम्भा मोचांशुमत्फला' इत्यमरः । गर्भदलं गर्भस्य मध्यस्य दलं गर्भभूतं दलं वा पुष्पाणि इषवो बाणा यस्य स पुष्पेषुः मदनः "शम्बरारिर्मनसिजः कुसुमेषुः" इत्यमरः । तस्य यो बाणः शरः तत्संबन्धी यो व्रणः अरुः 'व्रणोऽस्त्रियामीर्ममरुः' इत्यमरः । तस्य यः पट्टः पट्टिका तस्य शोभां बबन्ध उत्पादयामासेति यावत् ॥ उपजातिवृत्तम् ॥ ३१ ॥

कस्यापीति । स्वस्य पादौ स्वपादौ तयोः सेवा तत्र स्थितिः आराधनं च तत्र अभिरतेऽपि तत्परेऽपि मयि नूपुरयुग्मे कस्यापि दृष्ट्याः यद्विरागः वैराग्यं, प्रेमराहित्यमित्यर्थः । यदिति सामान्ये नपुंसकं अव्ययं वा । एवं तदित्यत्रापि ज्ञेयं तत् किं ननु श्रुतं इत्यर्थः । या स्वपादसेवां करोति तत्र प्रेमदृष्टिरवश्यं भवितव्येव तादृशी मयि कस्यापि नास्तीत्यर्थः । लोकः प्रायः चपलदृष्टिरेव प्रचलति ननु स्वपाददृष्टिरित्यभिप्रायेणेदं । इतीव इति हेतोरिव तस्याः सीतायाः सती च ते नूपुरे च सन्नूपुरे सन्मञ्जीरौ 'मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः । तयोः युग्मेन युगलेन "युग्मं [illegible] युगलं युगं" इत्यमरः । अमन्दं प्रभूतं शैथिल्यं शिथिलस्य भावः 'ब्राह्मणादित्वात् ष्यञ्' । अतानि व्यस्तारि । ननु विस्तारे कर्मणि लुङ् चिणो लुक् । उत्प्रेक्षालंकारः । उपजातिवृत्तम् ॥ ३२ ॥

सखीसमीपेऽपि सखेदवृत्तिश्चन्द्रातपैरप्यनुतापभाजा ।
देहेन वैदेहसुता निनाय दिनानि दीना कतिचित्कथञ्चित् ॥ ३३ ॥
सार्धं द्विजैः पावनसोमपाननिर्धूतपाप्मन्यथ सत्रनाथे ।
मखस्य कोटिं प्रकृतस्य मुख्ये क्षितिक्षितामीयुषि वीतविघ्नम् ॥३४॥
जनाधिनाथः पुरुहूतकल्पः समग्रशक्तिः सुतयुग्ममन्यत् ।
ततः समादाय सुमन्त्रसूतः पुरं प्रपेदे जनकस्य राज्ञः ॥ ३५ ॥

---

सखीति । सखीना आलीनां समीपेपि खेदो दुःख तेन सहिता सखेदा वृत्तिः यस्याः । आलिभिः समाधाने कृतेपि दृढविरहात् सखेदवृत्तिरित्यर्थः । अतएव दीना विदेहायां मिथिलायां भवः वैदेहः जनकः 'विदेहा मिथिले समे' इति त्रिकाण्डशेषः । 'तत्र भवः' इत्यण् । तस्य सुता कन्या सीता चंद्रस्य आतपैः प्रकाशैः अनुताप खेद भजतीति अनुतापभाक् तेन 'भजोण्विः' । चंद्रकिरणदर्शने हि विरहिणां खेदजननात् एवमुक्तिः एतादृशेन देहेन सह । साहित्ये तृतीया । कथंचित् अतिसंकटेनेत्यर्थः । कतिचित् कानिचित् दिनानि दिवसान् निनाय यापयामासेत्यर्थः । णीञ् प्रापणे लिट् । उपजातिवृत्तम् । अनुप्रासविशेषोक्त्यलंकारौ ॥ ३३ ॥

युग्म सार्धमिति ॥ अथ एतादृशसीतावस्थानंतर द्विजैः ब्राह्मणैः सार्धं साक 'साकं सार्धं समं सह' इत्यमरः । साहित्ये तृतीया । पावनं पवित्र यत् सोमरसस्य पान यज्ञांगभूत तेन निर्धूतः निर्दलितः पाप्मा पाप यस्य 'अस्त्री पङ्कं पुमान् पाप्मा' इत्यमरः । एतादृशे सत्रस्य कस्यचिद् यजमानैक्यादिधर्मविशेषविशिष्टस्य यज्ञविशेषस्य नाथः अधिपतिः तस्मिन् । क्षितिं क्षियन्ति परयन्ति इति क्षितिक्षितः तेषां राज्ञां 'नृपभूपमहीक्षितः' इत्यमरः । शेषे षष्ठी । मुखमिव प्रधानत्वात् मुख्यः 'शाखादिभ्यो यः' इतीवार्थे यप्रत्ययः । तस्मिन् प्रकृतस्य उपक्रांतस्य मखस्य सत्रविशेषस्य कोटिं उत्कर्षः 'अत्युत्कर्षाश्रयः कोट्यः' इत्यमरः । अवसानमित्यर्थः । वीतानि विघ्नानि यस्मात् तत् वीतविघ्नं इण्धात्वर्थविशेषणमिदम् । ईयुषि प्राप्तवति सति । उपेत्यविवक्षितमित्युक्तत्वात् 'उपेयिवाननाश्वाननूचानश्च' इति क्वसु प्रत्ययः । उपजातिवृत्तम् ॥ ३४ ॥

जनेति । ततः जनकयज्ञसमाप्त्यनंतरं ईषदूनः पुरुहूतः पुरुहूतकल्पः इन्द्रतुल्य इति यावत् 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति कल्पप्प्रत्ययः । समग्राः संपूर्णाः शक्तयः प्रभावोत्साहमंत्रजाः शक्तयो यस्य । सुमंत्रः एतन्नामको मंत्री सूतः सारथिः यस्य । सुमंत्रः सूतः मंत्री चेति रामायणे प्रसिद्धम् । एतादृशः जनानां लोकानां अधिनाथः अधिपतिः दशरथः अन्यत् रामलक्ष्मणयुग्मादन्यत् सुतयोः पुत्रयोः युग्मं भरतशत्रुघ्नौ इत्यर्थः । समादाय जनकस्य विदेहस्य राज्ञः पुरं नगरं प्रपेदे । सुतयुग्ममिति प्रधानत्वादुक्तं

क्षत्रस्य नक्षत्रमदोषदुष्टं वैवाहिकं वाहितशत्रुवीरः ।
पुरोहितेनाभिहितं निशम्य सम्पादयामास विधिं विधिज्ञः ॥ ३६ ॥
स्नातद्विजारूढमदद्विपेन्द्रस्कन्धस्थकार्तस्वरकुम्भपङ्क्त्या ।
नृपस्य धिष्ण्ये प्रकृते समन्तादच्छेदवत्पावनतीर्थतोये ॥ ३७ ॥
रथ्योभयान्ताहितशातकुम्भकुम्भस्थपङ्केरुहगन्धविद्धे
तिरोदधाने गगनं सुगन्धौ कर्पूरकृष्णागरुसारधूपे ॥ ३८ ॥

---

वस्तुतस्तु चतुरङ्गसैन्येन सकलोद्वाहिकोपयोगिसामग्र्या च पौरजनसमूहेन च नगरं प्रपेदे इति ज्ञेयम् । अतएव जनाधिनाथः पुरहूतकल्पः समग्रशक्ति इत्यादिविशेषणानि स्वरसतः सङ्गच्छन्ते । रामायणे तथैवोक्तत्वाद्राज्ञो विवाहस्य तथैवौचित्याच्च । वक्ष्यति च ' गृहेषु चशङ्कितयस्य ' इत्यादि इति दिक् । अनुप्रासालङ्कारः । उपेन्द्रवज्रावृत्तम् ॥ ३५ ॥

क्षत्रस्येति । वाहिताः प्रापिताः शत्रुरूपा वीराः येन । शत्रुराज्यं गृहीत्वा ते निजराज्यात् निःसारिता येनेत्यर्थः । न केवलं शत्रुनिबर्हणपूर्वकं साम्राज्यवृद्धिकारक एव किन्तु स्वधर्मज्ञानपूर्वकं तस्यानुष्ठातापीत्याह–विधिज्ञः विधिं विधानं जानाति इति विधिज्ञः ' आतोऽनुपसर्गे कः ' इति कप्रत्ययः उपपदसमासः । अर्थात् जनकः पुरोहितेन शतानन्देन ' पुरोधास्तु पुरोहितः ' इत्यमरः । अभिहितं उक्तं अदोषदुष्टं दोषैः दुर्भाग्याद्येकविंशतिमहादोषैः ज्योतिःशास्त्रोक्तैः दुष्टं न भवतीति अदोषदुष्टम् । वैवाहिकं विवाहं अर्हतीति वैवाहिकं 'तदर्हति' इति ठक् । नक्षत्रं ऋक्षं निशम्य क्षत्रस्य क्षत्रियस्य वैवाहिकं विवाहयोग्यं विधिं इतिकर्तव्यतारूपं सम्पादयामास । वैवाहिकमिति नक्षत्रस्य विधेश्च तन्त्रेण विशेषणम् । अनुप्रासालङ्कारः । उपजातिवृत्तम् ॥ ३६ ॥

इत आरभ्य वैवाहिकमविधानकमेव कलकेनाह–स्नातेति । स्नाताः कृताभिषेकाः ये द्विजाः तैः आरूढाः अधिष्ठिताः ये मदयुक्ता द्विपेन्द्राः । शाकपार्थिवादित्वान्मध्यमपदलोपिसमासः । तेषां स्कंधेषु तिष्ठंतीति स्कंधस्थाः । सुपीति कः । एतादृशा ये कार्तस्वरस्य सुवर्णस्य कुम्भाः कलशाः ' रुक्मं कार्तस्वरं जाम्बूनदम् ' इत्यमरः । तेषां पङ्क्त्या परम्परया नृपस्य जनकस्य धिष्ण्ये स्थाने ' धिष्ण्यं स्थाने गृहे भेऽग्नौ ' इत्यमरः । समन्तात् छेदः विच्छेदः अस्ति अस्य तत् छेदवत् तादृशं न भवति तत् अच्छेदवत् सर्वतो विद्यमानं पावनं पवित्रं तीर्थतोयं तीर्थोदकं यस्मिन् एतादृशे सर्वत उदकव्याप्ते इत्यर्थः । प्रकृते सति विरचिते सति । सर्वेषां सप्तम्यन्तानां पदानां ततानेति नवमश्लोकस्थक्रियापदेन अन्वयः । उपजातिवृत्तम् ॥ ३७ ॥

रथ्येति । उभौ अंतौ प्रान्तौ उभयान्तौ रथ्यायाः प्रतोल्याः यौ उभयान्तौ तत्र आहिताः ये शातकुंभस्य सुवर्णस्य कुम्भाः कलशाः । 'तपनीयं शातकुंभं'

चरत्सु वन्द्याननिःसृतेषु नरेन्द्रसूनोर्जयघोषणेषु ।
प्रध्मातशङ्खध्वनिबृंहितेषु ध्वनत्सु तूर्येषु च मंगलाय ॥ ३९ ॥
लाजा जलं दर्भमिति प्रसक्तमाविष्कृताम्रेडितशीघ्रनादे ।
आहूय सम्पादयतोऽपि भृत्यान् प्रत्युद्व्रजत्याकुलभृत्यवर्गे ॥ ४० ॥
ज्ञातुं मुहुर्यामघटीजलस्य वृत्तिं प्रयुक्ते नृपदासवृन्दे ।
धावत्युरोघातनिपातितार्धमार्गस्थलोकेऽपि गतागताभ्याम् ॥ ४१ ॥

---

इत्यमरः । तत्र तिष्ठतीति कुम्भस्थानि 'सुपीति कः' । यानि पङ्केरुहाणि कमलानि तेषां यो गंधः सुगन्धः तेन विद्धे ताडिते मिश्रिते इति यावत् । सुष्ठु गंधः आमोदः यस्य स सुगंधिः तस्मिन् 'गंधो गंधक आमोदे' इति विश्वः । 'गंधस्येदुत्पूतिसुसुरभिभ्यः' इति समासान्तः इकारादेशः । कर्पूरः चंद्रनामा कृष्णागरुसारश्च तद्रूपो यो धूपः तस्मिन् गगनं आकाशं 'नभोऽन्तरिक्षं गगनम्' इत्यमरः । तिरोधत्ते इति तिरोदधानः तस्मिन् आच्छादयितरि सति । तिरोपूर्वका द्धातेः शानच् । अनुप्रासालंकारः । उपजातिवृत्तम् ॥ ३८ ॥

चरत्स्विति । नराणां इन्द्रः अधिपतिः तस्य सूनुः श्रीरामचन्द्रः तस्य मंगलाय भद्राय 'भद्रं कल्याणं मंगलं शुभम्' इत्यमरः । तादर्थ्ये चतुर्थी । जयस्य घोषणानि विशब्दनानि जयोऽस्तु इत्यादिशब्दोच्चारणानि तेषु वन्दिनां स्तुतिपाठकानां 'वन्दिनः स्तुतिपाठकाः' इत्यमरः । आननानि मुखानि तेभ्यः निःसृतेषु बहिर्गतेषु सत्सु च प्रध्माताः फूत्कृताः 'ध्माशब्दाग्निसंयोगयोः' इत्यस्मात् कर्मणि क्तः । ये शङ्खाः कंबवः तेषां ध्वनिभिः शब्दैः बृंहितेषु वर्धितेषु । बृह्बृंहि वृद्धौ कर्मणि क्तः । तूर्येषु वाद्येषु ध्वनत्सु रणत्सु सत्सु ॥ उपजातिवृत्तम् ॥ ३९ ॥

लाजा इति । संपादयंति निष्पादयन्ति इति संपादयंतः तान् संपादयतः अपि अर्थात् लाजाः जलं दर्भं इति कर्माणि गम्यते । भृत्यान् कर्मकरान् । 'भृञोऽसंज्ञायां' इति क्यप् । आहूय लाजाः जलं दर्भं संपादयत इति संपादनक्रियानिरूपितानि कर्माणीमानि तत्र 'न ब्राह्मणं हन्यात्' इतिवत् दर्भमिति जात्येकवचननिर्देशः । प्रसक्तं क्रियाविशेषणमेतत् । सतर्कं इत्यर्थः । निरंतरमिति यावत् । आविष्कृतः प्रकटीकृतः आम्रेडितः द्विस्त्रिरुक्तः शीघ्रनादः त्वरितध्वनिर्येन एतादृशो आकुल- कार्यसंभ्रांतः यः भृत्यवर्गः तस्मिन् उद्व्रजति सति उद्गच्छति सतीत्यर्थः । अनुप्रासालंकारः । इंद्रवज्रावृत्तम् ॥ ४० ॥

ज्ञातुमिति । यामः प्रहरः तत्संबंधि घटी घटिकाख्यो यंत्रविशेषः स्पष्टः । तत्संबंधि यज्जलं उदकं अथवा यामज्ञानार्थं यद्घटीजलं तस्य वृत्तिं वर्तनं ज्ञातुं अवगंतुं प्रयुक्ते नियुक्ते गतं गमनं आगतं आगमनं ताभ्यां हेतुभ्यां उरसां घातः निघातः ताडनं यस्मिन् तद्युरोघातं यथा स्यात्तथा निपातिताः

आसन्नभूतो महितो मुहूर्तः किं स्थीयते तावदिति प्रगल्भम् ।
वृद्धेषु वंशद्वितयस्य धीरं स्नानाय सद्यस्त्वरयत्सु रामम् ॥ ४२ ॥
उच्चैर्भृतान्यस्वरमुच्चरत्सु समं समाविष्कृतमंगलेषु ।
आपूरिताशेषककुन्मुखेषु पटुप्रसक्तं पटहध्वनेषु ॥ ४३ ॥
वेत्रेण वेत्रग्रहणाधिकारे जने च तत्रानुपयोगवन्ति ।
दिदृक्षुवृन्दानि निरस्यमाने मुखेन हुंकारवता नितान्तम् ॥ ४४ ॥

---

अर्धमार्गे निष्पतंति अर्धमार्गस्थाः तादृशाः लोकाः येन एतादृशे नृपस्य राज्ञः ये दासाः भृत्याः तेषां वृंदे समूहे अपि धावति सति । अपिः पूर्वोक्तकार्याणां समुच्चायकः । कियान् कालो जात इति ज्ञानार्थं स्थापितघटिकापात्रस्थजल-निरीक्षणार्थं सभ्रमेण धावतां भृत्यानां मार्गस्थलोकानां च उद्घातपूर्वकं निपातो जात इति तात्पर्यम् । तेन त्वरातिशयो व्यज्यते । इंद्रवज्रा-वृत्तम् ॥ ४१ ॥

आसन्नेति । महितः पूजितः । मह पूजायां 'मतिबुद्धिपूजार्थेभ्यश्च' इति क्तः । मुहूर्तः आसन्नभूतः समीपवर्तीत्यर्थः । किं स्थीयते तावत् तूष्णीं किं स्थीयते इत्यर्थः । तावदिति वाक्यालंकारे । इति प्रगल्भं प्रौढं यथा स्यात्तथा वंशयोः अन्ववाययोः द्वितयं द्वय तस्य तत्संबंधिनः वृद्धेषु, जनकदशरथकुलवृद्धेष्वि-त्यर्थः । धीरं प्राज्ञं 'धीरो मनीषी ज्ञः प्राज्ञः' इत्यमरः । रामं सद्यः सपदि 'सद्यः सपदि तत्क्षणे' इत्यमरः । स्नानाय अभिषेकाय त्वरयत्सु सत्सु ॥ इंद्रवज्रावृत्तम् ॥ ४२ ॥

उच्चैरिति । समाविष्कृतानि प्रकटीकृतानि मंगलानि यैः तादृशेषु आपूरितानि अशेषाणां ककुभां दिशां मुखानि यैः एतादृशेषु पटु मनोहरं प्रसक्तं सलग्नं यथा स्यात्तथा पटहानां आनकानां । 'आनकः पटहोऽस्त्री स्यात्' इत्यमरः । ध्वनाः शब्दाः । 'घञर्थे कविधानं' इति भावे कप्रत्ययः । तेषु समं युगपत् उच्चैर्भृतः स्वस्मिन् संमिश्रितः अन्येषां वाद्यानां स्वरः ध्वनिः यस्मिन् कर्मणि यथा स्यात्तथा । उच्चरंति उद्गच्छंति इति उच्चरतः तेषु सत्सु । उपजा-तिवृत्तम् ॥ ४३ ॥

वेत्रेणेति । वेत्रग्रहणे अधिकारो यस्य स वेत्रग्रहणाधिकारः वेत्रग्रहणनियुक्त इत्यर्थः । एतादृशे जने हुंकारः अस्ति अस्मिन् तत् हुंकारवत् तेन 'तदस्यास्त्य-स्मिन्' इति मतुप् । मुखेन वक्त्रेण तत्र विवाहोपयोगिसामग्रीसंघटने उपयोगः सामग्रीसंघटनयोगः अस्ति येषां तानि उपयोगवंति तादृशानि न भवंतीति अनु-पयोगवंति एतादृशानि द्रष्टुं अर्थात् विवाहकुतुकं इच्छवः दिदृक्षवः तेषां वृंदानि वेत्रेण निरस्यते दूरीकरोति इति निरस्यमानः 'उपसर्गादस्यत्यूह्योः' इति आत्मनेपदं तस्मिन् सति । चकारः पूर्वोक्तकार्यसमुच्चयार्थः । उपजातिवृत्तम् ॥ ४४ ॥

हुङ्कारमात्रप्रथितैरमर्षैस्तिर्यक्कराग्रस्य विकम्पितेन ।
निवारयन्तो मुखरं जनौघं माशाब्दिका वेश्मनि तत्र चेरुः ॥ ४५ ॥
शच्या विवाहस्य विधानमाद्यं नामान्तरेण प्रथितं विधिज्ञः ।
पर्यस्य चित्तानि तथा सुतायाः नृपस्य तत्रैव जनस्ततान ॥ ४६ ॥
केचिद्विधातुं विधिमुद्यतेभ्यः क्रियासु दक्षाः कुशलेतरेभ्यः ।
आच्छिद्य वैवाहिककर्मयोग्यवस्तूनि भृत्या विदधुर्विधानम् ॥४७॥

---

हुङ्कारमिति । हुङ्कारः हुंकरणं तदेव हुङ्कारमात्रं मयूरव्यंसकादित्वात्समासः । तेन प्रथितैः वित्तैः । ' प्रतीते प्रथितख्यातवित्त-' इत्यादमरः। हुङ्कार इत्यत्र ' वर्णात्कारः ' इत्युक्तेऽपि ' वषट्कार ' इति निर्देशेन क्वचित् समुदायादपि कारप्रत्ययः । अमर्षैः क्रोधैः करणैः निवारणक्रियायां करणमिदम् । करस्य अग्रं कराग्रं तस्य कराग्रस्य तिर्यक् वक्रं यथास्यात्तथा विकम्पितेन विधूननेन करणेन । मुखं लक्षणया मुखशब्दः अस्यास्तीति मुखरः ' रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानं ' इति वार्तिकेन मत्वर्थीयो रप्रत्ययः । जनानां ओघः समूहः तं जनसमूहमित्यर्थः । निवारयति निषेधयति इति निवारयन्तः निषेधयन्त इत्यर्थः । मा शब्दं कार्ष्ट इति य आह ते माशाब्दिकाः ' तदाहेति माशब्दादिभ्य उपसंख्यानं ' इति ठक् । तत्र तस्मिन् विशन्ति यस्मिन् इति वेश्म ' विशू प्रवेशने अस्मात् धातुकात् अन्येष्वपि दृश्यते ' इति अधिकरणे मनिन् । तस्मिन् चेरुः चरधातोर्लिटि एत्वाभ्यासलोपौ । उपजातिवृत्तम् ॥ ४५ ॥

शच्या इति । तथा पूर्वोक्तविवाहागमवदित्यर्थः । विधिं विवाहविधिं जानातीति विधिज्ञः ' आतोऽनुपसर्गे कः ' इति कप्रत्ययः । एतादृशः जनः याज्ञिकलोक इत्यर्थः । अन्यन्नाम नामान्तरं तेन पूजनं इति नाम्नेत्यर्थः । प्रथितं प्रसिद्धं नृपस्य जनकस्य सुतायाः पुत्र्याः सीतायाः विवाहस्य आद्यं प्रथमं शच्याः इन्द्राण्याः विधानं पूजनरूपं कर्मेत्यर्थः । तत्रैव शचीपूजनकर्मण्येव चित्तानि अन्तःकरणानि पर्यस्य निक्षिप्य ततान विस्तारयामास । वैरस्यं माभूदिति चित्तैकाग्र्येण याज्ञिकाः इन्द्राणीपूजनं कार्यामासुः । इदं वाग्दानाङ्गभूतम् । तथाहि ततो दाता पात्रस्थतिलतण्डुलपुञ्जे शचीमावाह्य षोडशोपचारैः पूजयेत् तां च कन्यया प्रार्थयेत्—' देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभामिनि ॥ विवाहं भाग्यमारोग्यं पुत्रलाभं च देहि मे ' इति । ततः पुरन्ध्रीभिर्नीराजनादिमाङ्गलिकं कार्यं विधाय गन्धताम्बूलादिना पूजिता आशिषमाप्नुयुरित्यादि । उपजातिवृत्तम् ॥ ४६ ॥

केचिदिति । केचित् क्रियासु विवाहोपयोगिक्रियासु दक्षाः कुशलाः भृत्याः सेवकाः विधिं वैवाहिकसाधनविधिं विधातुं कर्तुं उद्यतेभ्यः प्रवृत्तेभ्य इत्यर्थः । कुशलेभ्यः निष्णातेभ्यः । इतरे अन्ये कुशलेतरे तेभ्यः । विवाहः प्रयोजनमस्ये-

स्नानस्य रत्नाभरणेन दीप्तमाकल्पमन्ते विधिवद्विधाय ।
ययौ वधूर्वेदविदा कृतार्थवेद्या उपान्तं विधुरा स्मरेण ॥ ४८ ॥
अथोपनिन्ये नयकोविदेन महेन्द्रसख्यास्तनुजेन तन्वी ।
लज्जावधेया विधवेतराभिर्विभूषिताऽसौ विभुनन्दनाय ॥ ४९ ॥
समाददे सम्मदभिन्नधैर्यः पाणिं फणीन्द्राङ्गगुरुप्रकोष्ठः ।
तस्याः कुमारः सुकुमारसन्धिं वामेतरं वामविलोचनायाः ५० ॥

---

ति वैवाहिक ' प्रयोजन ' इति ठञ्। वैवाहिकं यत् कर्म तस्य योग्यानि अर्हाणि यानि वस्तूनि तानि आच्छिद्य बलात्कारेण गृहीत्वा विधाम अर्थाद्वैवाहिकं विदधुः चक्रुः । विपूर्वात् दधातेर्लिट् ॥ अनुप्रासालङ्कारः । उपजातिवृत्तम् ॥ ४७ ॥

स्नानस्येति । स्मरेण मदनेन विधुरा विकला विह्वलेति यावत् । 'वैकल्येऽपि च विश्लेषे विधुरं विकले त्रिषु' इति मेदिनी । एतादृशी वधूः सीता ' वधूः स्त्री शारिवोपध्यौ ' । ' स्नुषा शठीनवोढासु ' इति मेदिनी । स्नानस्य अभिषेकस्य अंते अवसाने रत्नानां आभरणे अलंकारः । जात्येकवचनं । तेन दीप्त उज्वलित आकल्पं वेषं 'आकल्पवेषौ नेपथ्यं' इत्यमरः । विधिं अर्हं विधिवत् ' तदर्हं ' इति वतिः । यथायोग्यमित्यर्थः । विधाय कृत्वा वेदान् वेत्तीति वेदवित् तेन ' सत्सूद्विष ' इत्यादिना क्विप् । अर्थात् पुरोहितेन कर्त्रा कृता अर्था विवाहसामग्री यस्मिन् एतादृशा वेद्याः परिष्कृतभूम्याः 'वेदिः परिष्कृताभूमिः' इत्यमरः । उपांत समीपभाग ययौ आप । या प्रापणे । प्रापणमिह गतिः । लिट् । अनुप्रासालंकारः । उपजातिवृत्तम् ॥ ४८ ॥

अथेति । अथ वेद्युपांतप्राप्त्यनंतरं लज्जायाः ह्रियः विधेया वश्या । यद्यपि 'विधेयो विनयग्राही' इति कोशे विधेयशब्दः वचनस्थितवाचकः तथापि वचनस्थितौ हि परवशो भवति तत्तुल्यत्वात् लक्षणया विधेयशब्दः वश्यवाची गृह्यते । विधवाभ्यः विश्वस्ताभ्यः इतरा. अन्याः सुवासिन्य इत्यर्थः । ताभिः विभूषिता अलंकृता तन्वी कृशांगीत्यर्थः । असौ सीता । नये नीतौ कोविदः निपुणः 'सन् सुधीः कोविदो बुधः ' इत्यमरः । महेंद्रः मघवा तस्य सखी प्रिया अहल्या । महेन्द्रेण हि अहल्या कपिरूपेण भुक्ता इति पुराणेषु डिंडिमः । अतएव ' अहल्यायैजार ' इति सुब्रह्मण्याह्वाने इंद्रविशेषणम् । तस्याः तनुजेन पुत्रेण शतानंदेनेत्यर्थः । विभोः दशरथस्य नंदनः पुत्रः श्रीरामचन्द्रः तस्मै उपनिन्ये समीपं प्रापिता । अनुप्रासालंकारः । उपजातिवृत्तम् ॥ ४९ ॥

समाददं इति । संमदेन आनंदेन 'प्रमोदामोदसंमदाः ' इत्यमरः । भिन्नं नष्टं धैर्यं यस्य एतादृशः फणींद्रः शेषः तस्य अगं शरीरं भोग इत्यर्थः । तद्वत् गुरुः प्रकोष्ठो यस्य एतादृशः कुमारः रामः सुकुमारः मृदुलः संधिः यस्य एतादृशं

प्राज्यं ततः प्राज्ञतरेण हव्यमावर्जितं वर्जितदुष्कृतेन ।
विधातृधाम्ना विधिवत्कृशानौ सदिन्धने शीलधनेन तेन ॥ ५१ ॥
वेद्यामनंसीदनवद्यवृत्तिस्तन्वी ततो वेदविदा प्रयुक्ता ।
प्रदक्षिणीकृत्य विवाहसाक्षीकृतं कृशानुं सह राघवेण ॥ ५२ ॥
गण्डस्य बिम्बं दुहितुर्धरित्र्या घर्माम्भसां बिन्दुरलञ्चकार ।
चेतःस्थकन्दर्पकृशानुना वा तस्योष्मणा वा परमार्थवह्नेः ॥ ५३ ॥

---

वामे मनोहरे विलोचने नेत्रे यस्याः एतादृश्या. तस्या. वामात् सव्यात् 'वाम शरीर सव्यं स्यात्' इति कोशः । इतरः अन्यः न दक्षिणमित्यर्थः । पाणि हस्त समाददे जग्राह । अनुप्रासालंकार. । उपजातिवृत्तम् ॥ ५० ॥

प्राज्यमिति । ततः पाणिग्रहणानन्तर अतिशयेन प्राज्ञ. प्राज्ञतरः 'द्विवचनविभज्योपपदेतरबीयसुनौ' इत्यनेन तरप्प्रत्ययः । तेन 'धीरो मनीषी ज्ञः प्राज्ञः' इत्यमरः । तेन वर्जित त्यक्त दुष्कृत पाप येन 'अंहोदुरितदुष्कृत' इत्यमर. । विधाता महादेवः 'विधाता विश्वसृड्विधिः' इत्यमरः । स इव धाम यस्य तेन शीलधनेन शील सद्वृत्त 'शील स्वभावे सद्वृत्ते' इत्यमरः । तदेव धन यस्य तेन । तेन रामचन्द्रेण सदिधने सति उत्तमानि इधनानि काष्ठानि यस्मिन् एतादृशो कृशानौ अग्नौ 'कृशानुः पावकोनलः' इत्यमरः । विधि विवाहविधि अर्हे विधिवत् 'तदर्हं' इति वतिप्रत्ययः । प्राज्य प्रभूत 'प्रभूतं प्रचुरं प्राज्य' इत्यमरः । हव्य हविर्द्रव्य आवर्जित प्रक्षिप्त हुतमिति यावत् । अनुप्रासालंकारः । उपजातिवृत्तम् ॥ ५१ ॥

वेद्यामिति । ततः आज्यादिहविर्होमानंतर अनवद्या निर्दोषा वृत्ति वर्तनं यस्याः 'कुपूयकुत्सितावद्य' इत्यमरः । वेदान् ऋगादिवेदान् वेत्तीति वेदवित् । 'सत्सूद्विष' इत्यादिना क्विप् । तेन शतानंदेन प्रयुक्ता प्रेरिता तन्वी 'वोतोगुणवचनात्' इति ङीप् । कृशाङ्गयष्टिः सीतेत्यर्थः । वेद्यां परिष्कृतभूमौ 'वेदिः परिष्कृता भूमिः' इत्यमरः । विवाहसाक्षीकृतं साक्षाद्द्रष्टा साक्षी 'साक्षाद्द्रष्टरि संज्ञायां' इति इनिः । स इव कृतः साक्षीकृतः विवाहस्य उपयामस्य साक्षीकृतं साक्षिवत् द्रष्टारमित्यर्थः । कृशानुं अग्निं 'कृशानुः पावकोनलः' इत्यमरः । रघोः गोत्रापत्य पुमान् राघवः 'तस्यापत्यं' इत्यण् । तेन रामचंद्रेण सह प्रदक्षिणीकृत्य अनंसीत् प्रणतवती । 'नम् प्रह्वत्वे शब्दे च' इत्यस्मात् लुङि 'यमरमनमातां सक्' । अनुप्रासालंकारः ■ उपजातिवृत्तम् ॥ ५२ ॥

गंडस्येति । चेतसि अंतःकरणे तिष्ठतीति चेतस्थः 'सुपीति च' यः कन्दर्पः मदनः स एव कृशानुः तद्वदाहकत्वात् । तेन वा तस्य पुरोवर्तिनः परमः वास्तवः यो वह्निः अग्निः तस्य ऊष्मणा वा । द्वौ वाशब्दौ विकल्पार्थौ 'वा स्याद्विकल्पोपमयोः' इति मेदिनी । जातमिति शेषः । अथवा हेत्वर्थे तृतीये इमे तद्रे-

चकार चक्राङ्कतलेन पाणौ करेण भर्त्राऽभिनिपीड्यमाने ।
सीत्कारमाकुञ्चितदीर्घदृष्टिः स्पर्शेन वह्नेः किल नाम सीता ॥ ५४ ॥
व्यापारिता वाङ्मयपारगेण द्विजेन तेन द्विजराजवक्त्रा ।
बाला कृशानौ कृशगात्रयष्टिर्भावानभिज्ञाऽथ जुहाव लाजान् ॥ ५५ ॥
पत्युः करस्पर्शकृते कृशाङ्ग्या हर्षे सखीभिः प्रविभाव्यमाने ।
आचारधूमागमलब्धजन्मान्यश्रूणि तत्संवृतये बभूवुः ॥ ५६ ॥

---

तुना यानि घर्मरूपाणि अम्भांसि तेषां बिन्दुः पृषतः धरित्र्याः पृथिव्याः दुहितुः कन्यकायाः सीतायाः गडस्य कपोलस्य 'गण्डकपोलौ तत्परा हनुः' इत्यमरः । बिंब मण्डल 'बिंब तु प्रतिबिंबेऽपि मण्डले पुनपुंसक' इति मेदिनी । अलंचकार भूषयामास । रूपकालंकारः । इंद्रवज्रावृत्तम् ॥ ५३ ॥

चकारेति । सीता जानकी भर्त्रा रामचन्द्रेण चक्रस्य सुदर्शनचक्रस्य अंकः चिह्न संघर्षणजचिह्नमित्यर्थः । तले यस्य अथवा चक्रमेव अंकः चिह्नं तले यस्य एतादृशेन करेण हस्तेन पाणौ अर्थात्सीतायाः निपीड्यमाने गृह्यमाणे इत्यर्थः । आकुंचिता दीर्घा विशाला दृष्टिर्यस्याः एतादृशी सती वह्नेः अग्नेः स्पर्शेन किल स्पर्शेन वेत्यर्थः । किलेति संभावनायाम् । सीत्कार कामविकारजन्य शब्दविशेष चकार । नामेति संभावनायां 'नाम प्राकाश्यसंभाव्य-' इत्यमरः । उत्प्रेक्षालंकारः ॥ उपजातिवृत्तम् ॥ ५४ ॥

व्यापारितेति । अथ पाणिग्रहणानंतर वाङ्मयस्य वाग्जालस्य पारः अतः त गच्छतीति वाङ्मयपारगः 'अतात्यते'त्यादिना गमेर्डप्रत्ययः । तेन सकलवेदशास्त्र-पारगामिनेत्यर्थः । तेन पूर्वोक्तेन द्विजेन शतानंदाख्यब्राह्मणेन व्यापारिता प्रेरिता द्विजराजः चन्द्रः तद्वत् वक्त्र आननं यस्याः 'द्विजराजः शशधरो न-क्षत्रेशः' इत्यमरः । कृशा तनुः गात्रयष्टिः शरीरयष्टिः यस्याः भावस्य रत्यादि-भावस्य अनभिज्ञा रामाभिप्रायानभिज्ञा वा बाला सीता कृशानौ अग्नौ लाजान् जुहाव हुतवती । हुधातोर्लिट् । उपमालंकारः । उपजातिवृत्तम् ॥ ५५ ॥

पत्युरिति । कृश अंग यस्याः सा कृशांगी 'अंगगात्रकंठेभ्यः' इति ङीष् । तस्याः सीतायाः पत्युः श्रीरामस्य करस्य हस्तस्य । स्पर्शः तेन कृते उत्पादिते हर्षे आनंदे सखीभिः आलिभिः 'आलिः सखी वयस्याथ' इत्यमरः । प्रविभाव्यतेऽसौ प्रविभाव्यमानः । प्रविपूर्वकात् भूधातोर्णिजंतान् कर्मणि लट् शानजादेशश्च तस्मिन् । आनंदाश्र्वादिभिः तर्क्यमाणे सतीत्यर्थः । आचारस्य सदाचारस्य विवाहहोमरूपाचारस्येत्यर्थः । तत्संबंधी यो धूमः तस्य

**कृत्वा नमस्यामनुपूर्वमुक्तो भर्तुर्भुवो विप्रवरेण रामः ।**
**समेतजानिर्जनकस्य राज्ञो वन्दिस्तु तस्याङ्घ्रियुगं ववन्दे ॥ ५७ ॥**
**पश्यन् सुतं पाशभृतो दधानं गङ्गाकरासक्तकरस्य कान्तिम् ।**
**तस्थौ नृपः स्तब्धविशालदृष्टिरश्रुस्रवक्षालितपक्ष्मरेखः ॥ ५८ ॥**
**रत्नासनस्थामथ पौरमुख्या बाष्पप्रकाशप्रणयाः प्रणेमुः ।**
**भर्तुः सुतामेत्य वरं च तस्याः कक्षान्तरे दत्तसितातपत्रम् ॥ ५९ ॥**

---

आगमः प्राप्तिः तेन लब्धं प्राप्त जन्म उत्पत्तिर्येषां एतादृशानि अश्रूणि नेत्रोदकानि तस्य हर्षस्नानस्य सवृतिः आच्छादन तस्थे बभूवुः । यद्यपि भूधातुः सत्तार्थकः तथापि प्रकरणादत्र प्रभवनार्थको गृह्यते । प्रियकरस्पर्शजन्यानन्दाश्रूणि धूमजन्याश्रुभिः अन्यथाकृतानीत्यर्थः ॥ इन्द्रवज्रावृत्तम् ॥ ५६ ॥

कृत्वेति । विप्राणां वरः श्रेष्ठः तेन शतानदेन पूर्वस्य कार्यस्य पश्चात् इति अनुपूर्वं 'अव्यय विभक्ती' इत्यादिना पश्चादर्थेऽव्ययीभावः । पूर्वस्य लाजहोमस्य पश्चादित्यर्थः । उक्तः भाषितः रामः समेता जाया यस्य स तथा 'जायाया निङ्' इति समासांतो निङादेशः । समेतजानिः सन् स्त्रीयुक्तः सन्नित्यर्थः । भुवः पृथिव्याः भर्तुः दशरथस्य नमस्यां नमस्कारं कृत्वा जनकस्य एतत्संज्ञकस्य राज्ञः अंघ्रियुगं चरणयुगुलं ववंदे वंदिस्तु स्तुतिपाठकस्तु तस्य रामस्य अंघ्रियुगं ववंदे ॥ उपजातिवृत्तम् ॥ ५७ ॥

पश्यन्निति । गंगायाः भागीरथ्याः करे हस्ते आसक्तः सलग्नः करो यस्य तस्य गंगाकर हस्ते बिभ्राणस्येत्यर्थः । पाशान् बिभर्तीति पाशभृत् वरुणः तस्य कांतिं शोभां दधानम् दधातेः शानच् । सुतं पुत्रं रामचंद्रं पश्यन् अवलोकयतीति पश्यन् अश्रूणां स्रवः प्रस्रवः । 'ऋदोरप्' इत्यप् । तेन क्षालिना धौता पक्ष्मणा अक्षिलोम्नां रेखापंक्तिः यस्य एतादृशः नृपः दशरथः स्तब्धा निश्चला विशाला विस्तीर्णा दृष्टिर्यस्य एतादृशः सन् तस्थौ । वरुणसमानं पुत्रं जायासमेतं विलोक्य आनंदस्तब्धोऽभूदित्यर्थः ॥ इंद्रवज्रावृत्तम् ॥ ५८ ॥

रत्नासनस्थामिति । अथ रामस्य नृपदशरथादिनमनानन्तरं पौराः पुरवासि लोकाः मुख्याः प्रमुखा- येषाम् । पौरप्रमुखसर्वजना इत्यर्थः । कक्षा गृहस्य प्रकोष्ठः 'कक्षाप्रकोष्ठे हर्म्यादेः' इत्यमरः तस्याः अंतरे मध्ये 'अंतरमवकाशावधिपरिधानांतर्धिभेदतादर्थ्ये ॥ छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च' इत्यमरः ।

**नीत्वा विवाहोत्सवसम्भृतेन सुखेन राम कतिचिद्दिनानि ।**
**तत कदाचित्समयावबोधदृप्तेन विद्धो हृदि मन्मथेन ॥ ६० ॥**
**गौरीमिवाचारगुणेन गुर्वीं करे गृहीत्वा करभोपमोरूम् ।**
**सतल्पभूभागमनल्पशोभ भवप्रभावो भवन विवेश ॥ ६१ ॥**

---

एत्य शब्द बाल्यण अमुणा प्रकाश प्रसिद्ध प्रकाशोऽतिप्रसिद्धेऽपि ' इत्यम। प्रणय प्रेमा येषां एतादृशा सत रत्नाना आसन पीठ सिंहासनमित्यर्थ । तत्र तिष्ठति इति तथा तां भतु पालकस्य जनकस्येत्यर्थ । सुतां कन्यां सीतां दृष्ट अर्पित सित शुभ्र आतपत्र छत्र यस्मिन् धृतशुभ्रछत्रमित्यर्थ । एतादृश तस्या सीतायाः वर च राममद्र च इत्यर्थ । प्रणेमु नमश्चक्रुरित्यर्थ । इद्रवज्रा वृत्तम ॥ ५९ ॥

नीत्वेति । राम विवाहस्य उत्सव मह "मह उद्धव उत्सव" इत्यमर । तेन सम्भृत पूर्ण तेन सुखेन आनन्देन कतिचित कतिपयानि अल्पाऽल्पे तु चिन्मन इत्यमर । दिनानि दिवसानि नीत्वा तत कतिचिद्दिनयापनानन्तरं समयस्य तारुण्यसमयस्य निजबाणप्रहारयोग्यकालस्य वा अवबोध ज्ञान तेन दृप्त गर्वित तेन अनेककायासकृत्वेपि न स मर तस्या तस्या अवस्थायां निजया णेन विध्याम्येव इति । अहो मे दृप्तता इति गर्वितेनेत्यर्थ । मन्मथेन मदनेन हृदि विद्ध ताडित अभूत इत्यध्याहार । एव च दिनानि नीत्वा मन्मथताडितोऽभून इति समानकर्तृकत्वेन त्वाप्रत्ययोपपत्ति । अनुप्रासालङ्कार । उपजातिवृत्तम् ॥ ६० ॥

मदनवेधजनितकार्यमाह—गौरीमिति । भव शिव महत् प्रभावो यस्य एतादृश राम इत्यर्थ । आचारगुणेन सदाचारगुणेन गुर्वीं श्रेष्ठां सदाचार दृढामित्यर्थ । करभ करस्य बहिर्भाग स उपमा ययास्तौ करभोपमौ तौ ऊरू यस्या सा करभोपमोरु । करभवत मृदूरूरित्यर्थ । ताम । अत्र करभोपमोरु इत्येव पाठ न तु दीर्घ उपमानवाचिपूर्वपदत्वाभावेन ऊङ् प्राप्तेर भावात् । एतादृशीं सीतां गौरीमिव पार्वतीमिव अतएव रामस्य भवप्रभव इति विशेषण साधकम । करे हस्ते गृहीत्वा अनल्पा महती शोभा यस्य तदनल्प शोभ अनेकचित्रपदार्थै रञ्जितमित्यर्थ । तल्प शय्या तेन सहित सतल्प एतादृश भूभाग यस्य एतादृश भवन विवेश । अनुप्रासालङ्कार । उपजातिवृत्तम् ॥ ६१ ॥

भुवि विरचितमग्रे तल्पमालोक्य भीतिं
स्पृशति मनसि बालां साश्रुपातस्थितां ताम्।
नृपतिभवनरत्नस्तम्भमालिङ्ग्य दोर्भ्यां
रघुपतिरुपगुह्य प्रापयद्भूमिशय्याम् ॥ ६२ ॥

इति श्रीकुमारदासस्य कृतौ जानकीहरणे महाकाव्ये
सीताविवाहवर्णनं नाम सप्तमः सर्गः ॥ ७ ॥

---

भुवीति। रघूणां रघ्वपत्यानां पतिः रघुशब्दस्य रघ्वपत्ये लक्षणा। रामचन्द्रः अग्रे अग्रभागे भुवि भूम्यां विरचितं कृतं स्थापितमित्यर्थः। तल्पं शय्यां 'तल्पं शय्याट्टदारेषु' इत्यमरः। आलोक्य मनसि अन्तःकरणे भीतिं भयं स्पृशति सति इत्यर्थः। नृपतेः जनकस्य भवनं गृहं तत्सम्बन्धी यो रत्नस्तम्भः तं आलिङ्ग्य अवष्टभ्येत्यर्थः। अश्रूणां पातः पतनं तेन सहितं अश्रुपातं यथास्यात्तथा स्थितां 'सुप्सुपेति' समासः। तां बालां सीतां दोर्भ्यां भुजाभ्यां 'भुजबाहू प्रवेष्टो दोः' इत्यमरः। उपगुह्य आलिङ्ग्य भूमिशय्यां पूर्वोक्तां प्रापयत्। इति यथाभिमिति अयमर्थः कवेस्तु हृदयं ईश्वरः कविर्वा वेद ॥ मालिनीवृत्तम्। 'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ॥६२॥

इति श्री ६ श्रुतपदवाक्यप्रमाणपारावारीणमहामहोपाध्यायपदव्यलंकृत-
पण्डितप्रकाण्डश्रीकरहाटकरोपनामकश्रीमद्गोपालाचार्यान्तेवासिना
निगुडकरोपाभिधेन वासुदेवतनूजेन नारायणशर्मणा विर-
चितायां महोत्साहाख्यजानकीहरणकाव्यटीकायां
सप्तमः सर्गः समाप्तः ॥ ७ ॥

॥ श्रीकृष्णार्पणमस्तु ॥

---

# अष्टमः सर्गः ।

**आचरन्नथ स योषितो हठं सा च वामचरिताऽनुरागिणः ।**
**अप्यनीप्सितविधानचेष्टितौ तेनतुः सपदि सम्मदं मिथः ॥ १ ॥**
**कामिना समुपगृह्य बालिका सप्रयत्नमुपवेशिताऽप्यसौ ।**
**वाञ्छति स्म समुदेतुमङ्कतः साध्वसेन चपला मुहुर्मुहुः ॥ २ ॥**

---

श्रीराधाकृष्णाय नमः ॥ अथ कविः ' उद्यानसलिलक्रीडामधुपानरतोत्सवैः ' इत्याद्युक्तमहाकाव्यलक्षणाक्रान्तत्वात् वर्णनीयत्वेन प्राप्त श्रीसीतारामचन्द्रयोः शृंगारं विवर्णयिषुः पूर्वसर्गान्ते तयोः शय्यागृहप्रवेशं वर्णयित्वा तदुत्तरकालिक-क्रीडां वर्णयितुमाह—

आचरन्निति । अथ भूमिशय्याशयनानन्तरं योषितः स्त्रियाः सीताया इत्यर्थः । हठं बलात्कारं ' प्रसभं तु बलात्कारो हठः ' इत्यमरः । आचरन् कुर्वन् इत्यर्थः । आङ्पूर्वाच्चरतेः शतृप्रत्ययः । सः रामचंद्रः अनुरागः रतिः सोऽस्यास्तीति अनुरागी ' अत इनिठनौ ' इति इनिप्रत्ययः । तस्य अर्धाङ्गा-स्य वाम प्रतीप प्रतिकूलमिति यावत् । ' वामौ वल्गुप्रतीपौ द्वौ ' इत्यमरः । चरित आचरणं यस्याः एतादृशी सा च सीता च अनीप्सित अनभीष्टं यद्विधानं तद्विषयं चेष्टितं ययोः एतादृशावपि मिथः परस्परं ' मिथोऽन्योन्यं रहस्यपि ' इत्यमरः । सपदि सद्यः सम्मदं प्रमोदं ' प्रमोदामोदसम्मदाः ' इत्यमरः । तेनतुः विस्तारयाञ्चक्रतुः । तनु विस्तारे लिट् एत्वाभ्यासलोपौ । रामस्य हठा-त्कारः सीतायाः अन्तराभीप्सितोऽपि बहिरनभीप्सितत्वप्रदर्शनपेटया उभयोः रसातिशयपोषकोऽभूदित्यर्थः । अस्मिन्सर्गे सीतारामचन्द्रयोः सम्भोगशृंगारो वर्ण्यते । तल्लक्षणं तु ' दर्शनस्पर्शनादीनि निषेवेते विलासिनौ ॥ यत्रानुरक्ता-वन्योन्यं सम्भोगोऽयमुदाहृतः ' इति । तत्र सीतारामौ परस्परं आलम्बन-विभावौ । तदुक्तं ' आलम्बनो नायकादिस्तमालम्ब्य रसोद्गमात् ' इति । अत्र आदिपदेन नायिका प्रकृते श्रीरामचन्द्रः धीरोदात्तो नायकः तदुक्तं ' अविकत्थनः क्षमावानतिगम्भीरो महासत्वः ॥ स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः ' इति । तथा नायिका सीताऽपि ' नायकसामान्यगुणैर्भवति यथासम्भवैर्युक्ता ' । तत्र त्रिविधनायिकामध्ये इयं स्वीया । तदुक्तं ' विनयार्जवादि-युक्ता गृहकर्मपरा पतिव्रता स्वीया ' इत्यादि विशेषो विस्तरभिया न लिख्यते इति दिक् । अस्मिन्सर्गे द्विनवतिश्लोकपर्यंतं रथोद्धतावृत्तानि तल्लक्षणं तु ' रान्नराविह रथोद्धता लगौ ' इति ॥ १ ॥

कामिनेति । अतिशयितः कामः अस्यास्तीति कामी तेन । मत्वर्थे ' अत इनिठनौ ' इति इनिः । प्रयत्नेन प्रयासेन सहितं सप्रयत्नं यथा स्यात्तथा समु-

**राघवेण परिरभ्य पृष्ठतः सस्पृहं निगदिते मनोरथे ।**
**व्रीडयाऽवनतवक्त्रपङ्कजा धीरमस्मयत चारुहासिनी ॥ ३ ॥**
**अंगुलीषु परिगृह्य राघवे वेधयत्युरसि रागिभिर्नखैः ।**
**सस्मितं विघलितांगुलिर्बलादात्मनः करमुदास मानिनी ॥ ४ ॥**
**किं नु वक्ति कुपितेति वेदितुं कामिना निधुवने सविग्रहम् ।**
**याचितैनमभिकोपजिह्मितप्रेरितेक्षणकटु व्यलोकयत् ॥ ५ ॥**

---

पगृह्य सम्यगालिंग्य उपवेशितापि । अङ्कमित्यर्थाल्लभ्यते । साध्वसेन भीत्या 'भीतिर्भीः साध्वसं भयं' इत्यमरः । चपला चञ्चला असौ बालिका सीतेत्यर्थः । अङ्कात् इति अङ्कतः उत्सङ्गात् मुहुर्मुहुः पुनःपुनरित्यर्थः । समुद्यतुं अन्यत्र गन्तुमित्यर्थः । वाञ्छतिस्म इच्छतिस्म 'लट् स्मे' इति भूतार्थे लट् ॥ २ ॥

राघवेणेति । रघोः गोत्रापत्यं राघवः श्रीरामचन्द्रः तेन । पृष्ठतः पृष्ठभागमित्यर्थः । सार्वविभक्तिकस्तसिः । परिरभ्य आलिंग्य स्पृहया इच्छया सहितं सस्पृहं यथा स्यात्तथा मनोरथे संभोगेच्छारूपेऽभिलाषे निगदिते कथिते सति व्रीडया लज्जया अवनतं अधःकृतं वक्त्रपङ्कजं मुखकमलं यया एतादृशी चारुः मनोहरो यो हासः हास्यं सोऽस्ति अस्याः सा चारुहासिनी, सीतेति यावत् । चारुहासिनीत्यत्र कर्मधारयादपि इनिप्रत्ययः । 'असुब्वतः' इति भाष्यप्रयोगेण 'न कर्मधारयात्' इत्यस्य अनित्यत्वात्कृतः । धीरं गभीरं यथा स्यात्तथा अस्मयत ईषद्धसितवती । स्मिं ईषद्धसने लङ् ॥ ३ ॥

अंगुलीष्विति । राघवे रामे अंगुलीषु करशाखासु परिगृह्य धृत्वा रागः रक्तिमा अस्ति येषां तानि रागीणि तैः नखैः नखरैः उरसि वक्षःस्थले वेधयति सति विदारयति सतीत्यर्थः । स्मितेन हासेन सहितं सस्मितं यथा स्यात्तथा विघलिताः पृथक्कृताः अंगुलयः करशाखाः यया एतादृशी मानिनी कान्ता सीतेत्यर्थः । 'प्रमदा मानिनी कान्ता' इत्यमरः । बलात् हठात्कारेण आत्मनः स्वस्य करं हस्तं उदास उत्क्षिप्तवती । उत्पूर्वकात् 'असु क्षेपणे' इत्यस्माल्लिट् ॥ ४ ॥

किं न्विति । कुपिता अर्थात् सीता किं नु वक्ति किं वक्ष्यति । नु वितर्के । वर्तमानसामीप्ये लट् । इति वेदितुं ज्ञातुं कामिना कामविशिष्टेन श्रीरामेण पश्चात् विग्रहेण ग्रहः ग्रहणं 'ग्रहवृदनिश्चिगमश्च' इत्यप् । तेन सहितं सविग्रहं यथा स्यात्तथा निधुवने रते 'मैथुनं निधुवनं रतं' इत्यमरः । याचिता आलिंगनादिना तां धृत्वा रते प्रार्थितेत्यर्थः । सीतेति प्रकरणाल्लभ्यम् । अभितः कोपेन जिह्मितं कुटिलं एतादृशं प्रेरितं-प्रदीप्तम् अवलोकनं तेन कटु तीक्ष्णं यथा स्यात्तथा एनं रामं व्यलोकयत् ऐक्षत ॥ ५ ॥

**पुष्पकेतुहृतधैर्यबन्धनं तस्य भावमवगम्य निर्गमैः ।**
**साऽवकाशमथ कुर्वतीः सखीः संरुरोध वसनान्तसङ्गिनीः ॥ ६ ॥**
**इच्छति स्म विरहं न कामिनी सङ्गमं न भृशमाकुलीकृता ।**
**विप्रयोगसमये मनोभुवा लज्जया नृपसुतस्य सन्निधौ ॥ ७ ॥**
**तस्य हस्तमबला व्यपोहितुं मेखलागुणसमीपसङ्गिनम् ।**
**मन्दशक्तिररतिं न्यवेदयन्नीलनेत्रगलितेन वारिणा ॥ ८ ॥**
**तत्र राजदुहितुर्बलात्क्रियामाचरत्युदितलोचनाम्भसः ।**
**आगमिष्यदनुचिन्त्य खण्डनं भीतवत्कृशमकम्पताधरः ॥ ९ ॥**

---

पुष्पकेत्विति । अथ रामयाचनानन्तरं पुष्पाणि केतुर्ध्वजो यस्य स पुष्पकेतुः मदनः । 'प्रद्युम्नः मीनकेतनश्च कन्दर्पः पुष्पकेतनः' इति हेमः । तेन हृतं अपहृतं धैर्यमेव बन्धनं यस्य एतादृशं तस्य रामस्य भावं अभिप्रायं रतिचिकीर्षारूपमित्यर्थः । अवगम्य ज्ञात्वा । निर्गमैः बहिर्गमनैः । गम् धातोः 'ग्रहवृदृनिश्चिगमश्च' इति भावे अप् । अवकाशः चारितार्थ्यं तेन सहितं सावकाशं सफलमित्यर्थः । भावस्य विशेषणमेतत् । अथवा अवकाशं व्यवधानं कुर्वतीः वसनं वस्त्रं तस्य अन्तः अञ्चलं तस्य सङ्गः सम्बन्धः सः आसां अस्ति तासां ताः गृहीतवस्त्राञ्चला इत्यर्थः । एतादृशीः सखीः सा सीता संरुरोध ॥ ६ ॥

इच्छतीति । कामः अस्याः अस्तीति कामिनी । 'ऋन्नेभ्यो ङीप्' इति ङीप् । नृपस्य दशरथस्य सुतः पुत्रः रामः तस्य सन्निधौ सन्निकर्षे लज्जया त्रपया 'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा' इत्यमरः । सङ्गमं सम्भोगमित्यर्थः । न इच्छति स्म न काङ्क्षति स्म । विप्रयोगस्य वियोगस्य समये काले तस्मिन् । अत्र वियोगे नृपसुतस्येति अर्थाल्लभ्यते । मनसि भवतीति मनोभूः । 'क्विप् च' इति क्विप् । मदनः तेन भृशं अत्यन्तं आकुलीकृता विह्वलीकृता सती विरहं वियोगं न इच्छति स्मेत्यर्थः ॥ ७ ॥

तस्येति । अबला सीता मेखलायाः काञ्च्याः । 'स्त्रीकट्यां मेखला काञ्ची' इत्यमरः । यो गुणः तन्तुः तस्य समीपं समीपभागं तस्य सङ्गः सम्बन्धः सः अस्यास्तीति तं, नीवीमोचनार्थं मेखलागुणसमीपप्राप्तमित्यर्थः । तस्य रामस्य हस्तं करं व्यपोहितुं दूरीकर्तुं मन्दा शक्तिः सामर्थ्यं यस्याः तादृशी सती नीले नीलवर्णे ये नेत्रे नयने ताभ्यां गलितेन अधःप्रस्रुतेन वारिणा उदकेन, अश्रुणेति यावत् । रतिः रागः तद्विरुद्धा अरतिः द्वेष इत्यर्थः । 'रतिः स्त्रीस्मरदारेषु रागे सुरतगुह्ययोः' इति मेदिनी । तां न्यवेदयत् कथितवती 'निपूर्वाद्विद् ज्ञाने' इत्यस्माण्णिजन्ताल्लङ् ॥ ८ ॥

तत्रेति । तस्मिन्निति तत्र रामचन्द्रे इत्यर्थः । उदितं उत्पन्नं लोचनयोः नेत्रयोः अंभः उदकं यस्याः भीतत्वात् इत्यर्थः । राजा जनकः तस्य दुहिता कन्या सीता तस्याः बलात्क्रियां हठमित्यर्थः । 'प्रसभं तु बलात्कारो हठः'

न स्प्रक्ष्यामि रशनागुणं पुनर्निर्दयं भुजयुगेन पीडितः ।
इत्युवाच नृपसूनुरर्थिनी सा ततान परिरम्भमस्फुटम् ॥ १० ॥
अन्तरीयहरणे कृतत्वरं राघवं तमपयान्तमङ्गना ।
तत्पटान्तपरिधानरक्षिता संरुरोध परिरभ्य पृष्ठतः ॥ ११ ॥
अंशुकस्य निशि रक्षणाकुला हस्तयुग्मधृतनीविबन्धना ।
अप्रमादकृति विभ्रमन्तरा स्वापमाप शयने पराङ्मुखी ॥ १२ ॥

---

इत्यमरः । आचरतीति आचरन् तस्मिन्नाचरति कुर्वति सतीत्यर्थः । आगमिष्यति प्राप्स्यतीति आगमिष्यन् । 'लृटः सद्वा' इति लृटः शत्रादेशः । खंडन छेदन अनुचितत्व विमृश्य अधरः अधरोष्ठः भीतेन चकितेन तुल्यः भीतवत् । 'तत्र तुल्य' इति वतिः । भृशं अत्यंतं अकम्पत अवेपत । यथा कश्चित् चोरादिभ्यः भाविछेदनादिभीतिं स्मृत्वा कम्पते तद्वदधरः चकम्पे इत्यर्थः । उत्प्रेक्षालंकारः ॥ ९ ॥

नेति । नृपसूनुः श्रीरामः भुजयोः बाह्वोः युग्मं तेन । तव सीताया इति शेषः । निर्दयं निष्कृपं पीडितः आलिंगित इति यावत् । रशनायाः मेखलायाः गुणं पुनः न स्पृशामि इत्युवाच । त्वया अहं दृढं आलिंगितश्चेत् तव रशनागुणं पुनः न स्पृशामीत्युवाचेत्यर्थः । अर्थः रशनास्पर्शनाभावरूपप्रयोजनं अस्ति अस्याः सा अर्थिनी । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः । सा सीता । अस्फुटं अस्पष्टं मंदमित्यर्थः । 'स्फुटं प्रव्यक्तमुल्बणं' इत्यमरः । परिरंभं आलिंगनं 'परिरंभः परिष्वंगः' इत्यमरः । ततान विस्तार । तनु विस्तारे लिट् ॥ १० ॥

अंतरीयेति । प्रशस्तं अगं शरीरं यस्याः सा अंगना । 'अंगात् कल्याणे' इति गणसूत्रेण मत्वर्थीयो नप्रत्ययः । अंतरीयस्य परिधानस्य 'अंतरीयोपसंव्यानपरिधानान्यधोंशुके' इत्यमरः । हरणे अपहारे कृता त्वरा येन अपयान्तं दूरं गच्छंतं तं राघवं रामं पृष्ठतः परिरभ्य आलिंग्य तस्य रामस्य यः पटः वस्त्रं तस्य अंतः अपरं प्रदेशं परिधानं परिधानीयवस्त्रं तेन रक्षिता सती संरुरोध । निजपरिधानीयापहारिणं रामं तत्पृष्ठतो गत्वा तं परिरभ्य तत्पटैकदेशं परिधाय तं रुरोधेत्यर्थः ॥ ११ ॥

अंशुकस्येति । निशि रात्रौ अंशुकस्य वस्त्रस्य रक्षणे पालने आकुला व्यग्रा अतएव हस्तयोर्युग्मेन युगलेन धृतं अवष्टब्धं नीविबंधनं यया एतादृशी सती प्रमादकृतिः प्रमादकार्यं यस्मिन् तत् अप्रमादकृति सावधानं यथा स्यात्तथा पराङ् मुखं यस्याः सा पराङ्मुखी 'दिक्पूर्वपदात्' इति ङीष् । विभ्रं स्वाभाविका- शिरामहृतारक्तिविहरं अंतरा विना 'अंतरांतरेण युक्ते' इति द्वितीया । शयने पर्यंके स्वापं आप प्राप ॥ १२ ॥

यद्ररक्ष दृढवस्त्रबन्धनैः स्वापकालमवगम्य भर्तरि ।
तत्प्रमृष्टवति सद्गतस्मृतिः सा रुरोद मुषितेव सस्वरम् ॥ १३ ॥
यत्नगम्यमथ मैथिलीमुखं सोऽनुभूय नहि तृप्तिमाययौ ।
आननेन परिघट्य बोधितं राजहंस इव पद्मकुड्मलम् ॥ १४ ॥
प्रेमवेगदृढदंशपीडितं यस्तदीयमधरोष्ठपल्लवम् ।
तद्दयार्द्रहृदयः शनैः पिबन् स क्षणेन विनिनाय वेदनाम् ॥ १५ ॥
आहिते नृपतिशक्रसूनुना स्वाधरं विविधचाटुचेष्टितैः ।
पानवर्जितमदन्तपीडितं भूय एव सृजति स्म मानिनी ॥ १६ ॥

---

यद्दिति । सा सीता दृढानि यानि वस्त्रबन्धनानि पश्यादीनि तैः यत्, अतःशुक्रमित्यर्थः । ररक्ष रक्षितवती । भर्तरि रामचन्द्रे स्वापस्य शयनस्य काल समय अवगम्य ज्ञात्वा तत् परिधानीयांशुक प्रमृष्टवति स्पर्शं कुर्वति मोचनार्थं आकृष्टवति सतीत्यर्थः । सगता प्राप्ता स्मृतिः स्मरणं यस्याः सा, जागरिता सतीत्यर्थः । मुषितेव सस्वर स्वरेण महता ध्वनिना सहित यथा स्यात्तथा रुरोद । उपमालङ्कारः ॥ १३ ॥

यत्नगम्यमिति । अथ वस्त्रमोचनप्रकारानन्तर राजहंसः मरालविशेषः आननेन चञ्च्वा परिघट्य समर्थ्येत्यर्थः । बोधित विकसितं पद्मस्य कुड्मलः कलिका तमिव सः रामभद्रः यत्नेन प्रयत्नेन गम्यं प्राप्य मैथिल्याः सीतायाः मुख वक्त्र अनुभूय चुम्बनादिनाऽनुभूय तृप्तिं अलबुद्धि नहि आययौ न प्राप । उपमालङ्कारः ॥ १४ ॥

प्रेमेति । सः रामचन्द्रः यत् प्रेम्णः वेगः तेन यत् दृढदशनं तेन पीडितं तस्याः इद तदीय 'त्यदादीनि च' इति वृद्धसंज्ञायां 'वृद्धाच्छः' इति छ. । अधरोष्ठ एव पल्लव किसलय 'पुंसि क्लीबे च पल्लवः' इति व्याडिकोशात् नपुंसकलिङ्ग्यपि । तत् अधरोष्ठपल्लवमित्यर्थः । दयया कृपया आर्द्रं हृदयं अतःकरण यस्य सः पीडामाभूत् इति दयान्वित इत्यर्थः । अतएव शनैः मंदमदं पिबन् सन् क्षणेन क्षणमात्रेण आनन्देन वा 'अथ क्षण उद्धर्षो मह उद्धव उत्सवः' इत्यमरः । वेदना दशनजन्यपीडा विनिनाय दूरीचकार । रूपकालङ्कारः ॥ १५ ॥

आहितमिति । मानिनी सीता नृपतिशक्रः नृपश्रेष्ठः । दशरथ इत्यर्थः । तस्य सूनुः पुत्रः श्रीरामचन्द्रः तेन । विविधानि अनेकप्रकाराणि यानि चाटूनि मिथ्याप्रियभाषणानि चेष्टितानि च तैः आहितं स्वीकारितं स्वस्य रामस्य अधरं अधरोष्ठ दन्तैः दशनैः पीडितं न भवतीति अदन्तपीडितं पानेन प्राशनेन वर्जितं रहितं भूय एव पुनरपि सृजतिस्म उत्ससर्ज । रामचाटुभाषणेन तदधरं गृहीत्वापि लज्जया दशनपीडनाद्यकृत्वैव उत्सृष्टवतीत्यर्थः ॥ १६ ॥

स्वं नितम्बमपवाहितांशुकं कामिनी रहसि पश्यति प्रिये ।
प्रार्थनामपि विनैव पल्लवस्निग्धरागमधरं स्वयं ददौ ॥ १७ ॥
सा मदेन मदनेन लज्जया साध्वसेन च विमिश्रचेष्टिता ।
आययौ सपदि तादृशीं दशां या न वक्तुमपि शक्यविभ्रमा ॥ १८ ॥
वर्जनाय सुरतस्य भामिनी वाञ्छति स्म पटुचाटुचेष्टितम् ।
यत्तदेव समजायत स्वयं योषितो निधुवनस्य वृद्धये ॥ १९ ॥
अधुना सुरतखेदमात्मनः सम्मदं च पुलकेन कामिनी ।
व्याजहार ननु लज्जया गिरा नव्यनृत्यकुशलेव भर्तरि ॥ २० ॥

---

स्वमिति । रहसि एकान्तस्थले अपवाहितं दूरीकृतं अंशुकं वस्त्रं यस्मात् एतादृशं स्वं आत्मीयं नितम्बं कटिपश्चाद्भागं प्रिये रामचन्द्रे पश्यति सति अवलोकयति सति। दृशोर्लट् शत्रादेशः। कामिनी सीता प्रार्थनां विनैवापि रामचन्द्रकृतयाचनां विनाऽपीत्यर्थः। 'पृथग्विनानानाभिः' इति द्वितीया। पल्लवः किसलयः। 'पल्लवोऽस्त्री किसलयः' इत्यमरः। स इव स्निग्धः मधुरः रागः रक्तिमा यस्य एतादृशं अधरं अधरोष्ठं स्वयं आत्मनैव ददौ। डुदाञ् दाने लिट्। रामः विवस्त्रं निजनितम्बं माद्राक्षीत् इति याचनां विनापि निजाधरं तस्मै ददावित्यर्थः ॥ १७ ॥

सेति । सा सीता मदेन स्मयेन । 'चित्तोद्रेकः स्मयो मदः' इत्यमरः । मदनेन कामेन लज्जया त्रपया च । च. समुच्चयार्थः । साध्वसेन भयेन । 'भीतिर्भीः साध्वसं भयम्' इत्यमरः । विमिश्रं अर्थात् पूर्वोक्तावस्थाभिरिति शेषः । चेष्टितं यस्याः सा एतादृशी सती या दशा वक्तुमपि भाषितुमपि शक्यः विभ्रमः विलासो यस्याः एतादृशी न भवति तादृशीं दशां अवस्थां सपदि सद्यः आययौ आजगाम ॥ १८ ॥

वर्जनायेति । भामः क्रोधः दीप्तिर्वा सोऽस्या अस्तीति भामिनी । 'भामः क्रोधे रवौ दीप्तौ' इति मेदिनी । सुरतस्य निधुवनस्य वर्जनाय त्यागाय यत् पटु सुन्दरं चाटु मिथ्याप्रियं वाक्यं चेष्टितं च वाञ्छतिस्म इच्छतिस्म, प्रवर्तयामासेत्यर्थः । तदेव चाटुभाषितादिकमेव स्वयं स्वतः योषितः सीतायाः निधुवनस्य रतस्य वृद्धये वर्धनाय समजायत समभवत् ॥ विषमालंकारः । 'अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात्' इति लक्षणात् ॥ १९ ॥

अधुनेति । नव्या नूतना नृत्ये कुशला सेव । सा यथा भावैरेव अभिप्रायं ज्ञापयति, न तु भाषया वदति तद्वदित्यर्थः । कामिनी सीता भर्तरि रामचंद्रविषये आत्मनः स्वस्याः, सीताया इत्यर्थः।सुरतस्य खेदः श्रमः तं अधुना नेत्रोद्रेकेन व्याजहार कथयामास । च पुलकेन रोमाञ्चेन सम्मदं प्रमोदं व्याजहार कथयामास । लज्जया गिरा वाण्या करणभूतेन न तु व्याजहार । उपमालंकारः ॥ २० ॥

यद्यदास तरसाऽभियोजितं योषितो रतिषु खेदवृत्तये ।
तत्तदेव मृदु साधितं पुनः कामिनाऽपनयति स्म तच्छ्रमम् ॥ २१ ॥
केशपाशमथ बद्धुमुद्यता मैथिली निधुवनेन विश्लथम् ।
बाहुमूलगतलोचने प्रिये लज्जयाऽवनमति स्म सस्मितम् ॥ २२ ॥
इत्यनङ्गशिखिना हृते हृदि क्ष्माधिपस्य दुहितुर्निविष्टया ।
लज्जया कतिपयेषु तानवं वासरेषु गलितेषु शिश्रिये ॥ २३ ॥
शर्वरीषु विरलीकृतत्रपा निद्रया किल हृता नृपात्मजा ।
नीविबन्धनमतीत्य सस्थितं हस्तमस्य न बलादपाहरत् ॥ २४ ॥

---

यदिति । कामिना श्रीरामेण रतिषु योषितः सीतायाः तरसा वेगेन अभियोजितं कृतमित्यर्थः । यत् यत् वीप्सायां द्विर्वचनम् । खेदस्य दुःखस्य वृत्तिः वर्तनं तस्यै दुःखोत्पादनायेत्यर्थः । आस बभूव । 'असु गतिदीप्त्यादानेषु' इत्यस्मात् लिटि रूपम् । तत्तदेव तत्तत्कार्यमेव पुनः मृदु कोमलं साधितं कृतं तस्याः सीतायाः श्रमं खेदं अपनयति स्म दूरीचकार ॥ २१ ॥

केशपाशमिति । अथ पूर्वोक्तक्रीडानन्तरं निधुवनेन रतेन हेतुना विश्लथं शिथिलमित्यर्थः । केशपाशं केशसमूहं 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः । बद्धुं संयन्तुं उद्यता प्रवृत्ता मैथिली जानकी 'मैथिली जानकी सीता' इति त्रिकाण्डशेषः । प्रिये श्रीरामचन्द्रे बाह्वोः मूले बाहुमूले तयोर्गते प्राप्ते लोचने नयने यस्य एतादृशे सति केशपाशबन्धनार्थं उपरि क्रियमाणयोः बाह्वोः । मूलं प्रिये पश्यति सतीत्यर्थः । लज्जया त्रपया स्मितेन ईषद्धासेन सहितं सस्मितं यथा स्यात्तथा अवनमति स्म नम्रीबभूव ॥ २२ ॥

इतीति । इति पूर्वोक्तप्रकारेण अनङ्गो मदनः तस्य शिखी बाणः तेन हृते विद्धे क्ष्मायाः पृथ्व्याः अधिपः जनकः तस्य दुहितुः कन्यकायाः, सीताया इत्यर्थः । हृदि अन्तःकरणे निविष्टया विद्यमानया लज्जया कन्या कतिपयेषु वासरेषु दिवसेषु गलितेषु गतेषु सत्सु इत्यर्थः । तनोः कृशायाः भावः तानवं कार्श्यमित्यर्थः । शिश्रिये आश्रितम् । श्रिञ् धातोः कर्मणि लिट् । कामबाणवेधेन उत्तरोत्तरं रामपरिचयेन च सीताहृदयस्थलज्जा मन्दीभूतेत्यर्थः ॥ २३ ॥

शर्वरीष्विति । विरलीकृता शिथिलीकृता त्रपा लज्जा यया शर्वरीषु रात्रिषु 'अथ शर्वरी ■ निशा निशीथिनी रात्रिः' इत्यमरः । निद्रया स्वापेन । 'स्यान्निद्रा शयनं स्वापः' इत्यमरः । हृता किल व्याप्तेत्यर्थः । किलेति वाक्यालङ्कारे । नृपस्य जनकस्य आत्मजा सीता नीविः परिधानीयवस्त्रग्रन्थिः, तद्बन्धनं तत् अतीत्य अतिक्रम्य संस्थितं विद्यमानं अस्य रामस्य हस्तं करं बलात् हठात्कारेण न अपाहरत् न दूरीचकार । गलितत्रपात्वात् पूर्ववत् नीविबन्धनात् कदर्थितं हस्तं न दूरीचकारेत्यर्थः ॥ २४ ॥

निद्रिता प्रतिभयं भयानकस्यप्रदर्शनकृतं प्रपद्य सा ।
राघवं कुचघटावुरःस्थले सन्निधाय परिषस्वजे दृढम् ॥ २५ ॥
ज्ञातमन्मथरसा मदातुरे कामिनी क्षिपति नीविबन्धनम् ।
सा जहार करयुग्ममंशुकादञ्जलिं किल भयेन कुर्वती ॥ २६ ॥
सम्मताऽपि भुवनस्य मेधया राघवे निधुवनोपदेशिनि ।
व्याजहार गुणितस्य विस्मृतिं भूरिशस्तदुपदेशवाञ्छया ॥ २७ ॥
स्वेदबिन्दुनिचिताग्रनासिका धूतहस्तलतिका सशीत्कृतिः ।
सोढमन्मथरसा नृपात्मजा राघवस्य न बभूव तृप्तये ॥ २८ ॥

---

निद्रितेति । निद्रिता सुप्ता सा सीता भयानकस्य भयंकरस्य स्वप्नस्य दर्शनं अवलोकनं तेन कृतं उत्पादितं प्रतिभयं भीतिजनकं किंचित् ' घोरं भीमं भयानकम् ॥ भयंकरं प्रतिभयं ' इत्यमरः । प्रपद्य प्राप्य उरःस्थले कुचावेव घटौ कलशौ तौ प्रति राघवं रामचंद्रं सन्निधाय संस्थाप्येत्यर्थः । दृढं अशिथिलं यथा स्यात्तथा परिषस्वजे आलिलिंग ' उपसर्गात्सुनोति' इति षत्वम् ॥ २५ ॥

ज्ञातेति । ज्ञातः अवगतः मन्मथस्य रसः मदनस्य स्वादो यया एतादृशी कामिनी सा सीता मदेन आतुरे विह्वले सकामे इत्यर्थः । श्रीरामचंद्रे नीव्याः बंधनबंधः तत् क्षिपति दूरीकुर्वति सतीत्यर्थः । भयेन भीत्या अंजलिं संहतकरौ करोतीति कुर्वती कृधातोः शत्रंतात् ङीप् । किल अंशुकात् वस्त्रात् करयोः हस्तयोः युग्मं युगलं जहार दूरीचकार । नीवीरक्षणार्थं स्थापितं करयुग्मं ज्ञातमदनरसत्वात् अंजलीकरणनिमित्तेन दूरीचकारेत्यर्थः ॥ २६ ॥

संमतेति । राघवे रामे निधुवनस्य उपदेशः इतिकर्तव्यतोपदेशः सोऽस्यास्तीति निधुवनोपदेशी तस्मिन् सति, निधुवने इतिकर्तव्यतामुपदिशति सतीत्यर्थः । मेधया धारणावत्या बुद्ध्या ' धीर्धारणावती मेधा ' इत्यमरः । भुवनस्य विष्टपस्य ' विष्टपं भुवनं जगत् ' इत्यमरः । संमतापि मान्यापि । सीता मेधावतीति लोकमान्याऽपीत्यर्थः । भूरिशः ' बह्वल्पार्थाच्छस् कारकात्' इति शस् । बहुवारमित्यर्थः । गुणितस्य आवृतस्य अर्थात् रामोपदेशस्य तस्य रामस्य यः उपदेशः इतिकर्तव्योपदेशः तस्य वाञ्छया इच्छया विस्मृतिं विस्मरणं व्याजहार उवाच । व्याङ्पूर्वात् हृधातोः लिट् । रामः निधुवनस्य इतिकर्तव्यतां उपदिशतु इतीच्छया पुनः पुनः उपदिश्यमाने विस्मृतमित्युवाचेत्यर्थः ॥ २७ ॥

स्वेदेति । स्वेदस्य घर्मस्य बिंदवः पृषतः तैः निचिता व्याप्ता अग्रनासिका नासिकाग्रं यस्याः । धूता कंपिता हस्त एव लतिका लता यस्याः सा । शीत्कृतिः शीत्कारः रतौ शब्दविशेषः तेन सहिता सशीत्कृतिः । सोढः मन्मथस्य मदनस्य रसः स्वादो यया । मदनरसाविष्टेत्यर्थः । एतादृशी नृपस्य जनकस्य आत्मजा सीता राघवस्य रामस्य तृप्तये अलंभावाय न बभूव । एतादृशीं सीतां विलोक्य रामः तृप्तिं नाययौ इत्यर्थः ॥ २८ ॥

चोदयत्यवनिपालनन्दने शिक्षितुं युवतिकृत्यनैपुणम् ।
देहजन्मशरखण्डितत्रपा सा ययौ रहसि कर्मकर्तृताम् ॥ २९ ॥
यज्जगाद मदनेन पीडिता तत्सहासरसमुच्चिपि प्रिये ।
सस्मितं चलितदेहशोभिनी तच्चदस्फुटमुवाच लज्जिता ॥ ३० ॥
रत्नतल्पनिकटस्थिते शुके सहृतौ हृदि निधाय भाषितम् ।
निःसहास्मि विसृजेति जल्पति व्रीडिता परिजघान पञ्जरम् ॥ ३१ ॥
रामवक्त्रगलितैः श्रमाम्बुभिश्छादितं कुचयुगस्य कुङ्कुमम् ।
सा निरीक्ष्य हसिते सखीजने सम्मुखादपजगाम सस्मितम् ॥ ३२ ॥

---

चोदयतीति । अवनिं पृथ्वीं पालयतीति पृथ्वीपालः दशरथः तस्य नंदनः रामः तस्मिन् युवतीनां कृत्यं कार्यं तस्य नैपुणं निपुणत्वं शिक्षितुं अभ्यसितुं चोदयति प्रेरयति सतीत्यर्थः । देहाच्छरीराज्जन्म यस्य स देहजन्मा मदनः तस्य शरः बाणः तेन खंडिता नाशिता त्रपा लज्जा यस्याः एतादृशी सा रहसि एकान्तस्थले कर्म च तत्कर्तृ च कर्मकर्तृ 'सामान्ये नपुंसकं' । तस्य भावः कर्मकर्तृता तां ययौ प्राप्ता । सीता रामोपदेशकर्मापि मदनबाणपीडितत्वात् कर्त्री बभूव । यथा 'ओदनं पचति' इत्यत्र ओदनः पचने कर्म तथापि सौकर्यविवक्षायां 'पच्यते ओदनः स्वयमेव' इत्यत्र ओदनः कर्ता भवति । तथा युवतिकृत्यनैपुण्यशिक्षणप्रेरणकर्मापि सा मदनबाणपीडितत्वात् रामप्रेरणं विनापि स्वयमेव युवतिकर्मनैपुण्यं चकारेत्यर्थः ॥ २९ ॥

यदिति । मदनेन कामेन पीडिता । सीतेत्यध्याहारः । यत् किंचन जगाद उवाच । प्रिये रामे हासश्च रसश्च हासरसौ ताभ्यां सहिते सहासरसे स्मितपूर्वकप्रेमसहितमित्यर्थः । तत् भाषणं उच्चिपि अवोचत् इति उच्चिपत् तस्मिन् उच्चिपि सति । मुधातोर्लिटि वसो संप्रसारणे रूपम् । उक्तवति सतीत्यर्थः । स्मितेन हासेन सहितं सस्मितं यथा स्यात्तथा । चलिता निर्वपत्न इत्यर्थः । यो देहः तेन शोभते सा शोभिनी । 'सुप्यजातौ' इति णिन्यत्वात् ङीप् । लज्जा जाता अस्याः । तारकादित्वात् इतच् । ततः अनंतरं तदस्फुटमिव भाषणमित्यर्थः । अस्फुटं अस्पष्टं मंदमित्यर्थः । उवाच ॥ ३० ॥

रत्नेति । रत्नानां हीरकादीनां तल्पं शय्या तस्य निकटः समीपभागः । 'सनीडे निकटासन्नसन्निकृष्टसनीडवत्' इत्यमरः । तत्र स्थिते तिष्ठमाने शुके कीरे संहृतौ रतिसमये निःसहा सोढुमसमर्था । रतिश्रममिति शेषः । अस्मि विसृज मां मुञ्चेत्यर्थः । इति एवं रतकाले भाषितं भाषणम् । नपुंसके भावे क्तः । हृदि अंतःकरणे निधाय धारयित्वा जल्पति जल्पन् सति शुके सति व्रीडिता लज्जिता पञ्जरं परिजघान ताडयामास ॥ ३१ ॥

रामेति । रामस्य वक्त्रं मुखं तस्मात् गलितैः पतितैः श्रमेण श्रमजलैः ... कुचयोर्युगं युगलं कुचयुगं ... समासः । तैः

स्वानुवृत्तिविधिबन्ध्यमीर्ष्यया चोदितोद्यत इवाथ लज्जितम् ।
मैथिलस्य दुहितुर्मनोभवश्चेतसो निरवशेषमाक्षिपत् ॥ ३३ ॥
दीर्घिकाजलतरङ्गनिर्धुतत्यक्तपुष्पमयमण्डनौ क्वचित् ।
चाटुरम्यमितरेतराश्रयास्तेनतुः प्रमदकानने मृजाः ॥ ३४ ॥
चाटुमात्रकरणप्रयोजनस्तुल्यरागमपि स न्यपातयत् ।
योषितश्चरणपङ्कजद्वये यावकं तरुणपल्लवप्रभे ॥ ३५ ॥

---

छिद्रितं क्षालितमित्यर्थः । कुचयोः स्तनयोः युगस्य युगुलस्य कुङ्कुम विलेपनमित्यर्थः । निरीक्ष्य सखीजने आलिलोके हसितं अस्यास्तीति हसितः तस्मिन् हसिते सतीत्यर्थः । हस्धातोर्भावक्तान्तादर्शआदित्वादच्प्रत्ययः । सा सीता स्मितेन हासेन सहितं यथा स्यात्तथा समुत्सात् समुत्सदेशात् अर्थात्सखीजनस्य । व्यपजगाम दूरंगतवतीत्यर्थः ॥ ३२ ॥

स्वानुवृत्तीति । अथ सीताऽपगमानन्तरं ईर्ष्यया मदावेशेऽपि लज्जितं तिष्ठतीति ईर्ष्या नपुंसकेनापि लज्जितेन पुंलिङ्गोऽप्यहं पराजित इतीर्ष्यया वा । पूर्वं चोदितः प्रेरितः पश्चादुद्यतः चोदितोद्यतः 'पूर्वकालैकसर्व–' इत्यादिना समासः। तादृश इव मनोभवः मदनः मनसि भवो यस्येति व्यधिकरणबहुव्रीहिणा साधुः । स्वस्य मदनस्य या अनुवृत्तिः वर्तनं तस्याः यो विधिः विधानं मदनसत्ताविधानमित्यर्थः । तेन बन्ध्यं प्रतिबन्ध्यम् । मदनप्रचारे हि लज्जा प्रतिबन्धा भवति । अथवा स्वस्य मदनस्य अनुवृत्तिः अनुकूलवर्तनम् । तादृशमदनसञ्चारे हि स्त्रीणां यथेष्टं वर्तनं प्रसिद्धम् । तस्य यो विधिः करणं तेन बन्ध्यं प्रतिबन्ध्यम् । लज्जाप्रतिबन्धं विना मदनसञ्चारानुकूलं वर्तनं कदापि न भवतीति तात्पर्यम् । एतादृशं लज्जितं लज्जां 'नपुंसके भावे क्तः' इति भावे क्तप्रत्ययः । मैथिलस्य जनकस्य दुहितुः कन्यायाः सीतायाः चेतसः अंतःकरणात् निर्गतः अवशेषो यस्मात्तन्निरवशेषं समूलं यथा स्यात्तथा क्रियाविशेषणं लज्जितविशेषणं वा । आक्षिपत् दूरीचकार ॥ उत्प्रेक्षालंकारः ॥ ३३ ॥

दीर्घिकेति । प्रमदकानने प्रमदवने । अन्तःपुरोचितक्रीडाकानने इत्यर्थः । 'पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम् ॥ स्यादेतदेव प्रमदवनमन्तःपुरोचितम् ।' इत्यमरः । क्वचित् कुत्रचित् स्थले दीर्घिकायाः वापीनां यज्जलं तस्य ये तरंगाः भंगाः तैः निर्धुतानि कम्पितानि अतएव त्यक्तानि उत्सृष्टानि पुष्पमयानि मंडनानि भूषणानि याभ्यां एतादृशौ । जलक्रीडासमये तरंगाघातेन पुष्पालंकरणानां अव्यवस्थितत्वात् तानि याभ्यां त्यक्तानि इत्यर्थः । चाटु प्रेम्णा यन्मिथ्याकथनं तेन रम्यं मनोहरं तथा स्यात्तथा इतरेतरं परस्परं आश्रयो यासां एतादृशाः मृजाः जलोक्षणादिक्रियाः तेनतुः विस्तारयामासतुः ॥ ३४ ॥

चाटुमात्रेति । चाटुमात्रस्य प्रेम्णा मिथ्याभाषणादिमात्रस्य यत्करणं तत्प्रयोजनं फलं यस्य एतादृशः सः रामः तुल्यः समः रागः रक्तिमा यस्य

अंघ्रियुग्ममनुलिम्पतः स्वयं कुंकुमेन तरुणार्करोचिषा ।
आरुरोह करयुग्ममस्य तद्दूरमेव परिवृद्धवेपथु ॥ ३६ ॥
मेखलामधिनितम्बमर्पयंस्तत्र तत्र पुनरादधौ करम् ।
अत्र किञ्चिदनुपाश्रितं परं दुर्नहो ह्य मणिमेखलागुणः ॥ ३७ ॥
आचरन्नथ विलेपनक्रियां पाणिना पुलकितेन सस्पृहम् ।
सोऽस्पृशत्कुचयुगं पुनः पुनश्चन्दने सममपि स्थिते सति ॥ ३८ ॥

---

एतादृशो यावः अलक्तकः स एव यावकः तम् । 'यावादिभ्यः कन्' इति स्वार्थे कन् । योषितः सीतायाः तरुणः कोमलः यः पल्लवः किसलयः तद्वत्समा यस्य एतादृशी चरणपंकजयोः चरणकमलयोः यद्द्वयं द्वितयं न्यपातयेत् लिंपतिस्म । चरणयोर्नवपल्लववत्स्वत आरक्तत्वेपि चाटुकारप्रयोजनत्वात् यावकं लिंपतिस्मेत्यर्थः ॥ ३५ ॥

अंघ्रीति । तरुणः यः अर्कः नूतनोदयं प्राप्त इत्यर्थः । तद्वद्रोचिः कान्तिर्यस्य । 'रोचिः शोचिरुभे क्लीबे' इत्यमरः । तेन कुंकुमेन काश्मीरजन्मना 'न स्त्रियामथ कुंकुमम् ॥ काश्मीरजन्माऽग्निशिखं' इत्यमरः । स्वयं स्वतः अंघ्र्योः चरणयोः । सीताया इति शेषः । युग्मं युगुलं अनुलिंपतः विलेपनं कुर्वतः रामस्य तत् प्रसिद्धं करयुग्मं हस्तयुग्मं परिवृद्धः वृद्धिंगतः वेपथुः कंपः यस्य एतादृशं सत् अस्य सीतांघ्रियुग्मस्य दूरमेव आरुरोह स्थितमित्यर्थः । कुंकुमेन सीताचरणयुगुलं लिंपतो रामस्य करयुग्मं कामविकारोत्पन्नकंपेन चरणयुगपर्यंतं न प्राप किंतु दूरमेवातिष्ठदित्यर्थः ॥ ३६ ॥

मेखलामिति । नितंबयोः इत्यधिनितंब विभक्त्यर्थेऽव्ययीभावः । मेखलां कांचीं अर्पयन् ददत् तत्र तत्र प्रत्येकस्मिन्नितंबभागे इत्यर्थः । पुनः अभीक्ष्णं करं हस्तं आदधौ स्थापयामास व्यापारयामासेति यावत् । तत्र तत्र करव्यापारे हेतुमाह—अत्रेति । अत्र नितंबे परं किंचित् अनुपाश्रितं अवर्तमानम्, मेखलाबंधनार्थं कोऽप्यवलंबो नासीत्यर्थः । तदेवाह—मणिभिः रत्नैः युक्ता मेखला मणिमेखला तस्याः गुणः तन्तुः दुःखेन नह्यते बध्यते इति दुर्नहः । 'ईषद्दुःसुषु' इत्यादिना दुरुपपदे नहधातोः खल्प्रत्ययः । नु हेतौ अत इत्यर्थः । यतः किंचिदत्र मेखलागुणबंधनसाधनं नास्ति अतः मेखलागुणो दुर्नहः इति तात्पर्यम् ॥ ३७ ॥

आचरन्निति । अथ मेखलाबंधनप्रयासानन्तरं विलेपनस्य क्रियां आचरति इत्याचरन् सः रामचंद्रः चंदने समं न्यूनाधिकभावरहितं यथा स्यात्तथा स्थिते सत्यपि विद्यमानेऽपीत्यर्थः । पुलकाः रोमांचाः संजाता अस्य स पुलकितः । तारकादित्यादिनेतच्प्रत्ययः । पाणिना हस्तेन स्पृहया इच्छया सहितं सस्पृहम् साभिलाषमित्यर्थः । पुनः पुनः वारंवारं कुचयोः स्तनयोः युगं अस्पृशत् । चंदने समे स्थितेऽपि तत्समीकरणव्याजेन कुचयुगं पुनः पुनः अस्पृशदित्यर्थः ॥ ३८ ॥

पत्रमानमिततर्जनीशिरः स्पृष्टकर्णलतिकोऽयमर्पयन् ।
पूर्वमर्धमुकुलीकृतेक्षणं तन्मुखं सुरभिगर्भमन्वभूत् ॥ ३९ ॥
आत्मनैव स तदा पुरा कृतं यावकं युवतिदन्तवाससि ।
उज्जहार मुदितः पुनः पुनर्निष्पिबन्नधरपानलोलुपः ॥ ४० ॥
चुम्बति प्रियतमे विलोचनं योषितः स्वयमुपाहिताञ्जनम् ।
प्राप रागमविकाशचक्षुषा कर्णगं निजमशोकपल्लवम् ॥ ४१ ॥
पुष्परत्नविभवैर्यथेप्सितं सा विभूषयति राजनन्दने ।
दर्पणं न चकाङ्क्ष योषितां स्वामिसम्मदफलं हि मण्डनम् ॥४२॥

---

पत्रमिति । आनमितं ईषन्नम्रीकृतं यत्तर्जनीशिरः तर्जन्यग्रं पत्रार्पणार्थं आनमितं यत्तर्जन्यग्रमित्यर्थः । तेन स्पृष्टा कर्णलतिका कर्णवल्लिर्येन । तनुलते त्यादिवत् कर्णलतिकाशब्दो ज्ञेयः । एतादृशः रामचन्द्रः पत्रं पत्रलेखां अर्पयन् कुर्वन्सन् अर्धमुकुलीकृते अर्धकुड्मलीकृते ईक्षणे नेत्रे यस्मिन् एतादृशं सुरभिः सुगन्धः गर्भे मध्यभागे यस्य एतादृशं तन्मुखं तस्याः सीतायाः मुखं पूर्वं पत्रार्पणात्पूर्वं अन्वभूत् अनुभूतवान् । तदा स्वादं जग्राहेत्यर्थः । पत्ररचनार्थं तर्जन्यग्रेण उन्नमितकर्णं मुखं पूर्वं चुचुम्ब पश्चात पत्ररचनां चकारे त्यर्थः ॥ ३९ ॥

आत्मनैवेति । मुदितः हृष्टः अधरस्य ओष्ठस्य पानं प्राशनं तत्र लोलुपः लुब्धः 'समौ लोलुपलोलुभौ' इत्यमरः । अतएव पुनः पुनः निष्पिबन् आस्वादयन् । अधरमिति शेषः । स रामचन्द्रः तदा अधरपानकाले आत्मनैव स्वत एव पुरा अधरप्राशनात्प्राक् कृतं अर्पितं युवत्याः सीतायाः दन्तवाससि दन्तवसे अधरोष्ठे इत्यर्थः । यावकं अलक्तं उज्जहार दूरीचकार । स्वत एव पूर्वं समर्पितं अधरोष्ठे अलक्तकं पुनः पुनश्चुम्बनेन प्रमृष्टवानित्यर्थः ॥ ४० ॥

चुम्बतीति । स्वयं उपाहितं अर्पितं अंजनं कज्जलं यस्मिन् एतादृशं यो षितः सीतायाः विलोचनं नेत्रं अतिशयेन प्रियः प्रियतमः तस्मिन् रामे । 'अतिशायने तमबिष्ठनौ' इति तमप् । चुम्बतीति चुम्बन् तस्मिन् । अभ्यासे सत् । अविकाशं इषद्विकसितं चक्षुः नेत्रं येन । इतरस्य कर्णयोः समीपयोः गच्छतीति कर्णगं 'अन्येष्वपि दृश्यते' इति डप्रत्ययः । पार्श्वस्थादपि इत्यर्थः । अशोकस्य पल्लवं किसलयं निजं आत्मीयं 'स्वकं निजं निजं त्रिषु' इत्यमरः । रागं रक्तिमानं प्राप । पूर्वं नेत्रयोः अञ्जनसम्पर्कात् आरक्त चक्षुः स्पृष्टत्वेन च सम्प्रीतिमासीत् कर्णगतं अशोकपल्लवं नीलमिव अभासत । [illegible] कज्जलागमे अशोकपल्लवं निजरागं [illegible] ॥ ४१ ॥

[illegible] । राज्ञः दशरथस्य नन्दनः पुत्रः श्रीरामः तस्मिन् पुष्पाणां [illegible] च विभवैः ऐश्वर्यैः ईप्सितं अभीष्टं अनतिक्रम्य यथा । इति यथेप्सित

तामनङ्गकृतचारुविभ्रमां निर्दयं समुपगुह्य चुम्बितुम् ।
वीक्षितुं च समकालमप्रभुर्व्याकुलो मुहुरिवास राघवः ॥ ४३ ॥
प्रार्थिताऽपि न चकार कानिचित् कानिचित् स्वयमपि व्यधत्त सा
अन्वभूद्धृदयरत्नविक्रयक्रीतमेनमबला यथेप्सितम् ॥ ४४ ॥
येन येन हरति स्म तामसौ तत्तदेव पुनराप योषितः ।
सज्जनेषु विहितं हि यच्छुभं सद्य एव फलवन्धि जायते ॥४५॥
कर्मणि स्वमुखपद्मविच्युतस्वेदबिन्दुहतकान्तवक्षसि ।
तस्य चक्षुरुपकाङ्क्षि सत्वरं वीक्ष्य वक्षसि मुमोच सा तनुम् ॥४६॥

---

यथेष्टमित्यर्थः । विभूषयति । शानमेतत् । अलङ्कुर्वति सतीत्यर्थः । सा सीता दर्पणं मुकुरम् । 'दर्पणे मुकुरादर्शौ' इत्यमरः । चकाङ्क्ष ननु इयेष । नन्विति वाक्यालङ्कारे । ननु दर्पणाकाङ्क्षा स्वस्य नोपयुक्ता, नहि निजरूपदर्शनेन स्वोपयोगः, स्त्रीरूपदर्शनेन हि पुरुषस्यानन्दो जायते पुरुषस्य दर्शनेन वा स्त्रियाः अत आह—इति । हि यतः योषितां स्त्रीणां मण्डनं भूषणं स्वामिनः समदः आनन्दः स्वयमेव फलं यस्य एतादृशं भवतीति शेषः । यतः रामचन्द्रः मां मण्डयति अतः, मत्समदकारि निजरूपं सम्पन्नं वा न वेति दर्शनार्थं दर्पणं चकाङ्क्षेत्यर्थः । काव्यलिङ्गमलङ्कारः ॥ ४२ ॥

तामिति । अनङ्गेन मदनेन कर्त्रा कृतः उत्पादितः चारुः सुंदरः विभ्रमः विलासो यस्याः एतादृशीं तां सीतां निर्गता दया कृपा यस्मात् तत् निर्दयं दृढं यथा स्यात्तथा समुपगुह्य आलिङ्ग्य चुम्बितुं वीक्षितुं च, तामित्यर्थः । समकालं एककालमित्यर्थः । अप्रभुः असमर्थ इत्यर्थः । राघवः मुहुः वारंवारं व्याकुल इव आस बभूव ॥ ४३ ॥

प्रार्थितेति । सा सीता प्रार्थितापि, रामेणेति शेषः । कानिचित् शृंगारसंबन्धकार्याणि न चकार । कानिचित् स्वयमपि अप्रार्थितापीत्यर्थः । व्यधत्त चकार । विपूर्वाद्धधातोर्लङ् इति । अबला सीता हृदयमेव रत्नं तस्य विक्रयः मूल्यरूपेण दानं तेन क्रीतं एनं श्रीरामचन्द्रं यथेप्सितं यथाभीष्टं अन्वभूत् अनुभूतवती । स्वहृदयार्पणमूल्येन तेन साकं यथेष्टक्रीडितवतीत्यर्थः ॥ ४४ ॥

येनेति । असौ रामचन्द्रः येन येन शृंगारकर्मणा तां सीतां हरतिस्म, रञ्जयतिस्मेत्यर्थः । तत्तदेव तत्तच्छृंगारकर्म पुनः योषितः सीतायाः सकाशात् आप प्राप । येन येन अयं तां रंजयतिस्म तेन तेन साऽपि एनं रंजयतिस्मेत्यर्थः । हि यतः सज्जनेषु साधुजनेषु यत् शुभं विहितं कृतं तत् सद्य एव तत्कालमेवेत्यर्थः । फलं बध्नातीति फलबन्धि फलदायीत्यर्थः । जायते भवति । जनी प्रादुर्भावे लट् ' ज्ञाजनोर्जा ' इति जादेशः ॥ ४५ ॥

कर्मणीति । स्वस्याः सीतायाः यत् मुखपद्मं मुखकमलं तस्मात् विच्युताः गलिता ये स्वेदबिन्दवः घर्मबिन्दवः तैः हतं ताडितं कान्तस्य वक्षः वक्षःस्थलं

भर्तरि प्रणयमौनमास्थिता जल्पयत्यधरदंशनिग्रहैः ।
नो चकार वचनानि तादृशं निग्रहं चिरमवाप्तुमिच्छया ॥ ४७॥
बालया हृदि निधाय स स्तनौ दन्तमास्यकमलं प्रसादने ।
प्राप्तुमिच्छुरपि दोषतो विना रोषमाविरकरोन्मुहुर्मुहुः ॥ ४८ ॥
अल्पदोषविषयेऽपि जम्पती जग्मतुः प्रणयकोपवक्रताम् ।
स्नेहजातिरतिवृद्धिमागता जायते सुलभरोषसव्रणा ॥ ४९ ॥
अश्रुषु प्रणयकोपवह्निना लोहितत्वमुपनीय पायितः ।
तत्कटाक्षविशिखो निपातितो धैर्यमस्य निचकर्त सुस्थिरम् ॥५०॥

---

यस्मिन् एतादृशे कर्मणि सुरतकर्मणीत्यर्थः । तस्य रामस्य चक्षुः नेत्रम् । काञ्च्याः समीपं उपकाञ्चि । समीपेऽव्ययीभावः । मेखलासमीपे सञ्चरतीति सञ्चरत् वीक्ष्य वक्षसि रामस्येति शेषः । सा सीता तनु निजदेहं मुमोच तत्याज । विपरीतरतिसमये अतिरतिश्रमेण घर्मबिन्दुक्षालिते रामचन्द्रहृदये सति विश्रामार्थं किञ्चित् स्थितायां सीतायां तज्जघने रामे दृष्टिं प्रक्षिपति सति जघनं माद्राक्षीदित्यभिप्रायेण पुनरपि वक्षसि पपातेत्यर्थः ॥ ४६ ॥

भर्तरीति । प्रणयेन प्रेम्णा यन्मौनं मूकत्वं तत् आस्थिता प्राप्ता सीता अधरस्य दंशाः दशनानि तेषां निग्रहाः प्रतिबन्धाः तैः पुनरेव अधरदशनानि न करिष्यामि मौनं मुञ्च इति प्रतिज्ञापूर्वकं भर्तरि रामचन्द्रे जल्पयति भाषमाणे सतीत्यर्थः । 'बहुलमेतन्निदर्शनं' इति बहुलग्रहणत्वार्थे णिच् । तादृशं निग्रहं चिरं अवाप्तुं प्राप्तुं इच्छया वाञ्छया वचनानि भाषणानि नो चकार ॥ ४७ ॥

बालयेति । सः रामचन्द्रः प्रसादने प्रसादनविषये बालया सीतया कन्यया हृदि हृदये स्तनौ कुचौ दंतं दशनं आस्यकमलं मुखकमलं प्राप्तुं लब्धुं इच्छुरपि 'विदुरिच्छुः' इति निपातनात्साधुः दोषतो विना दोषं विना अपराधं विनेत्यर्थः । मुहुर्मुहुः वारंवार रोषं अमर्षं आविरकरोत् प्रकटीचकार ॥ ४८ ॥

अल्पदोषेति । जम्पती जायापती । जायाशब्दस्य जभावो निपात्यते । सीतारामचन्द्रौ इत्यर्थः । अल्पो यो दोषः अपराधरूपः तस्य विषयेऽपि प्रणयकोपेन प्रेमरोषेण वक्रतां कुटिलतां जग्मतुः प्रापतुः । तदेव समर्थयति-अतिवृद्धिं अत्युत्कर्षं आगता प्राप्ता स्नेहस्य हार्दस्य जातिः स्नेहसामान्यमित्यर्थः । सुलभः अल्पकारणेनापि लभ्य इत्यर्थः । यो रोषः क्रोधः तेन सव्रणा सच्छिद्रा जायते । अतिस्नेहे स्वल्पापराधेऽपि क्रोध आयातीत्यर्थः । काव्यलिङ्गमलंकारः ॥४९॥

अश्रुष्विति । प्रणयकोपः प्रेमकलहः स एव वह्निः तेन कृत्वा लोहितस्य आरक्तस्य भावः लोहितत्वं तत् उपनीय प्रापय्य अश्रुषु नेत्रोदकेषु पायितः प्राशित इत्यर्थः । पिबतेर्णिजन्तात् क्तप्रत्ययः 'शाच्छासाह्वाव्यावेपां युक्' इति युगागमः । निपातितः श्रीराम इति शेषः । तस्याः सीतायाः कटाक्षः

कोपिता चिरनिवृत्तसङ्गतिः सुप्तमेत्य परिबोधशङ्किनी ।
हस्तरुद्धचलकुण्डला धृतश्वासवृत्ति शनकैश्चुचुम्ब सा ॥ ५१ ॥
कैतवेन कलहेषु सुप्तया स क्षिपन् वसनमात्तसाध्वसः ।
चोर इत्युदितहासविभ्रमं सप्रगल्भमवखण्डितोऽधरे ॥ ५२ ॥
सङ्गतानि परिहृत्य चारिणौ मानमेत्य कलहं वितेनतुः ।
अन्ययातनयनौ किलोरसा तौ निहत्य कुहचित्परस्परम् ॥५३॥
एकदारिकदनः स कान्तया सार्धमिद्धरुचि सौधमम्बरम् ।
आरुरोह परिसंहृतातपं द्रष्टुमर्धशशिमौलिसन्निभः ॥ ५४ ॥

---

अपांगदर्शनमेव विशिखः बाणः अस्य रामस्य सुस्थिरं अतिस्थिरं धैर्यं गांभीर्यं निचकर्त चिच्छेद । कृती च्छेदने लिट् । रूपकालंकारः ॥ ५० ॥

कोपितेति । कोपिता अतएव चिरं चिरकालं निवृत्ता अन्तरिता संगतिः संगमो यस्याः एतादृशी सुप्तं श्रीरामचंद्रं एत्य प्राप्य । विरहासहिष्णुतयेति शेषः । परिबोधः निद्राहानिः तस्माच्छंकिनी हस्ताभ्यां रुद्धे निरुद्धे चले चंचले कुंडले यया सा सीता धृता श्वासवृत्तिः श्वासरूपप्राणावर्तनं यस्मिन्, निरुद्धश्वासमित्यर्थः । शनकैः चुचुंब ॥ ५१ ॥

कैतवेनेति । कलहेषु प्रेमकलहेष्वित्यर्थः । कैतवेन कपटेन सुप्तया शयितया वस्तुतो निद्राभावेऽपि सुप्ताकृतिं प्रदर्शयन्त्या इत्यर्थः । सीतया । वसनं वस्त्रं क्षिपन् दूरीकुर्वन् नीवीं मुंचन्नित्यर्थः । अतएव आत्तं गृहीतं साध्वसं भीतिर्येन वस्त्रापहाररूपापराधाद्भीतिः एतादृशः सः रामः चोर इति स्तेन इति उदितः, तत्पश्चात् हासविभ्रमो हास्यविलासो यस्मिन् अवखंडनक्रियाया विशेषणमिदम् । प्रगल्भेन धार्ष्ट्येन सहितं सप्रगल्भम् । प्रगल्भमित्यत्र भावप्रधानो निर्देशः । अधरे अधरोष्ठे खंडितः दष्ट इत्यर्थः ॥ ५२ ॥

संगतानीति । मानं अभिमानं एत्य प्राप्य अतएव संगतानि संगतीरित्यर्थः । सपूर्वाद्गमेर्भावे क्तः । परिहृत्य त्यक्त्वा चारिणौ चरन्तौ अतएव अन्यत्र अन्यस्मिन्विषये याते गते नयने नेत्रे ययोः एतादृशौ कुहचित् कुत्रचित् तौ सीतारामचंद्रौ उरसा वक्षःस्थलेन परस्परं अन्योन्यं निहत्य आहत्य कलहं वितेनतुः किल विस्तारयामासतुः किल । मानं प्राप्य परस्परसंगतिपरिहारेण कुत्रचिद्गतौ अन्यत्र विषये गतनेत्रौ यदृच्छया कुत्रचित् संगतौ अन्यत्र दृष्टेः सत्त्वात् परस्पराहतौ रक्षौ किमित्युरसि प्रहृत इति कलहं कृतवंतौ इत्यर्थः ॥ ५३ ॥

एकदेति । एकदा अरीणां शत्रूणां कदनं नाशनं यस्मात् स अरिकदनः । 'सप्तमीविशेषणे बहुव्रीहौ' इति ज्ञापकात् व्यधिकरणबहुव्रीहिः । कदनशब्दस्य नाशार्थत्वं पुराणादौ प्रसिद्धम् । शशिनः अर्धं अर्धशशी सः मौलौ यस्य स अर्धशशिमौलिः शिवः तेन सन्निभः तुल्यः स रामः कांतया सीतया सार्धं साकं 'सार्धं समं सह' इत्यमरः । इद्धा वृद्धिंगता रुचिः कांतिर्यस्य एतादृशं परितः संहृतः उपसंहृत इत्यर्थः । आतपः ऊष्मा यस्मात् एतादृशं

वासरस्य विगमे समीरणैर्मन्दनर्तितसुगन्धिकुन्तलाम् ।
सौधपृष्ठमधितस्थुषीं वचो जानकीमिदमुवाच राघवः ॥ ५५ ॥
सन्निगृह्य करसन्ततिं क्वचित्प्रस्थितोऽपि रविरेष रागवान् ।
अस्तमस्तकमधिश्रितः क्षणं पश्यतीव भुवनं समुत्सुकः ॥ ५६ ॥
दिङ्मुखादपसरन्तमातपं नष्टतेजसमनुव्रजन्मुहुः ।
रश्मिभिः समवबध्य भानुना कृष्यमाणमिव लक्ष्यते तमः ॥५७॥
अन्तराणि तमसः प्रयच्छति स्रष्टरीव जगती युगक्षये ।
भूय एव रविमण्डले रुचिर्लीयते जलधिमध्यवर्तिनी ॥ ५८ ॥

---

अवर आकाश? दृष्टु सौधं सुधया निर्मितं ( गचीति नृभाषाया प्रसिद्धम् ) स्थलविशेषं आरुरोह प्रापेत्यर्थः ॥ ५४ ॥

वासरस्येति । राघवः रामः वासरस्य दिवसस्य विगमे समाप्तौ समीरणैः वायुभिः मन्दं नर्तिताः चालिताः सुष्ठु गन्धो येषां ते सुगन्धयः एतादृशाः कुन्तलाः केशाः यस्याः सा । 'कुन्तलो वालः, कचः केशः शिरोरुहः' इत्यमरः । सुगन्धि-शब्दे 'गन्धस्येदुत्पूति-' इत्यादिना इकारादेशः । एतादृशीं सौधपृष्ठं सौधतलं अधितस्थुषीं अधिष्ठिताम् । अधिपूर्वात् स्थाधातोः लिटः क्वसुः 'त तस्थिवांस नगरोपकण्ठे' इत्यादिवत् लोकेऽपि साधुः । सौधपृष्ठमित्यत्र 'अधिशीङ्-स्थासां कर्म' इत्यनेन आधारस्य कर्मसंज्ञा । एतादृशीं जनकस्य अपत्यं स्त्री जानकी सीता तां इदं वक्ष्यमाणं वचः भाषणं उवाच । ब्रूञः द्विकर्म-कत्वात् 'अकथितं च' इत्यनेन कर्मसंज्ञा ॥ ५५ ॥

सन्निगृह्येति । कराणां किरणानां संततिः परंपरा तां सन्निगृह्य आकृष्ये-त्यर्थः । एष रविः प्रस्थितोऽपि कृतप्रस्थानारम्भोऽपि प्रपूर्वकात्स्थितेरादिकर्मणि कर्तरि क्तः । क्वचित् अस्तस्य अस्ताचलस्य मस्तकं शिखरं अधिश्रितः प्राप्त इत्यर्थः । अतएव रागः रक्तिमा अस्यास्तीति रागवान् अनुरक्तश्च 'तदस्या-स्त्यस्मिन्' इति मतुप् । अतएव समुत्सुकः उत्कण्ठितः सन् क्षणं क्षणमात्रं भुवनं विष्टपं पश्यतीव अवलोकयतीव । यथा कश्चित् ग्रामान्तरं प्रस्थितः उत्कण्ठया पूर्वाधिष्ठितं देशं पश्यति तद्वदित्यर्थः । उत्प्रेक्षालङ्कारः ॥ ५६ ॥

दिङ्मुखादिति । दिङ्मुखात् अपसरन्तं दूरीभवन्तं नष्टं तेजः कान्तिः यस्य एतादृशं आतपं प्रकाशं 'प्रकाशो द्योत आतपः' इत्यमरः । मुहुः वारं वारं अनुव्रजति अनुगच्छति इत्यनुव्रजत् अनुगच्छदित्यर्थः । एतादृशं तमः अन्धकारः भानुना सूर्येण कर्त्रा रश्मिभिः किरणैः प्रग्रहैश्च 'किरणप्रग्रहौ रश्मी' इत्यमरः । समवबध्य बन्धनं कृत्वेति यावत् । कृष्यमाणमिव आकृष्यमाणमिव । कृषधातोः कर्मणि लट् शानजादेशः । लक्ष्यते दृश्यते । अस्तसमये सङ्कु-चितकिरणाननुव्रजत् तमः तैर्बद्धा आकृष्यमाणमिव लक्ष्यत इत्यर्थः ॥ ५७ ॥

अंतराणीति । युगानां क्षयः नाशः तस्मिन् प्रलये इत्यर्थः । जगती पृथ्वी तमसः अन्धकारस्य अन्तराणि अवकाशान् प्रयच्छति ददातीति प्रयच्छन्

ध्वान्तजालमुपयाति सर्वतः सागरे निहितमण्डलं रविम् ।
वारिभिः पिहितदण्डमायतं भृङ्गचक्रमिव फुल्लमम्बुजम् ॥ ५९ ॥
एकचक्रमिव राजते नभःस्यन्दनस्य रविबिम्बमस्तगम् ।
उत्पतत्यविकले निशाकरे धातुपङ्कपरिदिग्धमण्डलम् ॥ ६० ॥
संहृतात्मकिरणं यथा यथा वृद्धिमुद्वहति मण्डलं क्रमात् ।
सागराम्भसि तथा तथा रविर्गौरवादिव शनैर्निमज्जति ॥ ६१ ॥
उन्मुखा दिनकरस्य रश्मयः सागरान्तरितमण्डलश्रियः ।
भान्ति तोयमभिभूय निर्गता वाडवस्य शिखिनः शिखा इव ॥ ६२ ॥

---

तस्मिन् "तम आसीत् तमसा गूढमग्रे" इति श्रुतेः । स्रष्टरीव जगन्निर्मातरीव, जलधेः समुद्रस्य मध्ये मध्यभागे वर्तिनी रुचिः कान्तिः भूय एव पुनरपि रवेः सूर्यस्य मंडले लीयते विलीना भवति । लीङ् श्लेषणे दिवादिः । उपमालङ्कारः ॥ ५८ ॥

ध्वान्तेति । वारिभिः उदकैः पिहितः आच्छन्नः दंडः नालो यस्य एतादृशं आयतं विस्तीर्णं फुल्लं विकसितं अम्बुजं कमलं भृङ्गाणां भ्रमराणां चक्रं समूहः भृङ्गचक्रं तद्वत् सागरे समुद्रे निहितं स्थापितं मंडलं यस्य एतादृशं रविं सूर्यं सर्वतः सर्वभागे । 'उभसर्वतसोः कार्या—' इत्यनेन तसंतस्य उभशब्दस्य योगात् रविशब्दात् द्वितीया । ध्वान्तस्य अंधकारस्य जालं समूहः उपयाति समीपं प्राप्नोति । उपमालङ्कारः ॥ ५९ ॥

एकचक्रमिति । अविकले संपूर्णे निशां रात्रिं करोतीति निशाकरः चन्द्रः तस्मिन् 'दिवाविभानिशा'इत्यादिना टप्रत्ययः । उत्पतति उद्गच्छति इति उत्पतन् तस्मिन् उद्गच्छति सतीत्यर्थः । धातोः गैरिकादेः पङ्कः कर्दमः तेन परिदिग्धं लिप्तं मंडलं यस्य रथचक्रं यथा गैरिकादिपङ्केन लिप्तं भवति तद्वच्चन्द्रोदये सति सन्ध्यारक्तवर्णेन लिप्तमित्यर्थः । एतादृशं अस्तं अस्ताचलं गच्छतीति अस्तगं 'अन्येष्वपि दृश्यते' इति डप्रत्ययः । एतादृशं रविबिम्बं सूर्यबिम्बं नभः आकाशमेव स्यन्दनः रथः तस्य एकं च तच्चक्रं च एकचक्रं तदिव राजते शोभते । उपमालङ्कारः ॥ ६० ॥

संहृतेति । संहृताः उपसंहृताः आत्मनः किरणा येन एतादृशं मंडलं सूर्यमंडलं क्रमात् अनुक्रमात् यथा यथा वृद्धिं स्थौल्यं उद्वहति धारयति । अस्तसमये सूर्यमंडलं स्थूलमिव प्रतिभासतीति सार्वजनीनमेतत् । तथा तथा रविः सूर्यः गौरवात् सकलविश्वानां स्वामित्वम् धारणजन्यगौरवादिवेत्यर्थः । सागरस्य समुद्रस्य अंभसि उदके शनैः मंदमंदं निमज्जति । उत्प्रेक्षालङ्कारः ॥ ६१ ॥

उन्मुखा इति । सागरे समुद्रे अंतरिता व्यवहिता मंडलस्य श्रीः यस्य एतादृशस्य दिनकरस्य सूर्यस्य ऊर्ध्वं मुखं येषां ते उन्मुखाः एतादृशाः रश्मयः

सन्ध्यया च परिरुद्धमग्रतो वासरस्य विगमे घनं तमः ।
भाति सिन्धुजलमिश्रमेकतः प्रावृषीव सलिलं पयोनिधेः ॥ ६३ ॥
सन्ध्ययाऽरुणितपत्रसञ्चयं श्लक्ष्णपल्लवनिरन्तरं वनम् ।
विन्दतीव परिणामसम्पदं पश्य तत्तमसि सर्पति क्रमात् ॥ ६४ ॥
अन्धकारनिकरेण सर्वतः कृष्णसर्पमलिनेन सर्पता ।
रुध्यमानविषयाः समन्ततः संकुचन्ति परिखा नु दिग्भुवः ॥ ६५ ॥
भाति मत्तशिखिकण्ठकर्बुरं ध्वान्तजालपरिरुद्धमम्बरम् ।
अर्कदीपकृततापसम्भृतप्रौढकज्जलमलीमसं यथा ॥ ६६ ॥

---

किरणाः तोयं उदकं अभिभूय परामृश्य निर्भिद्येत्यर्थः । निर्गताः । वडवायाः अपत्यं पुमान् वाडवः तस्य शिखा सन्ति यस्य स शिखी तस्य 'व्रीह्यादित्वात् निप्रत्ययः । वडवाग्नेरित्यर्थः । शिखा इव ज्वाला इव भाति दीप्यते । उपमालङ्कारः ॥ ६२ ॥

सन्ध्ययेति । वासरस्य दिवसस्य विगमे समाप्तौ अग्रतः अग्रभागे सन्ध्या पितृप्रसूः । 'सायंसन्ध्या पितृप्रसूः' इत्यमरः । मिश्रं घनं सान्द्रं तमः अंधकारः प्रावृषि वर्षाकाले एकतः एकस्मिन् भागे सार्वविभक्तिकस्तसिः । सिंधोः नद्याः जलेन भिन्नं मिश्रं पयोनिधेः समुद्रस्य सलिलमिव उदकमिव भाति शोभते । प्रावृट्काले नदीनां पूरेण ताम्रोदकत्वात् समुद्रसलिलस्य च नीलत्वादित्यर्थः । उपमालङ्कारः ॥ ६३ ॥

संध्ययारुणितेति । श्लक्ष्णाः कोमलाः मृदुलाः वा ये पल्लवाः किसलयाः तैः निरंतरं निबिडितं सन्ध्यया अरुणितं आरक्तीकृतं पत्रसंचयः पत्रसमूहो यस्मिन् एतादृशं वनं अरण्यं तमसि अंधकारे क्रमात् सर्पति व्याप्नुवति सतीत्यर्थः । परिणामस्य पक्वतायाः या संपत् संपत्तिः तां विंदतीव लभत इव ननु अरण्यं पश्य अवलोकय । पल्लवाः पूर्वं तावदारक्ता भवन्ति परिणामदशायां तु हरिता भवन्ति तथा च पूर्वं वनस्थपल्लवाः कोमलत्वेन सन्ध्याप्रकाशेन च आरक्ताः पश्चात् क्रमात्तमसि उपसर्पति सति परिणामसंपदं हरितत्वं प्राप्ता इत्यर्थः । उत्प्रेक्षालङ्कारः ॥ ६४ ॥

अन्धकारेणेति । दिगेव भूः तस्याः सर्वतः परिखा परिखासदृशप्रान्तभागाः कृष्णसर्प इव मलिनः कृष्णः तेन सर्पता गच्छता, व्याप्नुवतेत्यर्थः । एतादृशेन अन्धकारस्य ध्वांतस्य निकरः समूहः तेन समंततः परितः रुध्यमानाः विषयाः यासां एतादृशाः संकुचन्ति नु संकोचं प्राप्नुवन्ति किलेत्यर्थः । उत्प्रेक्षालङ्कारः ॥ ६५ ॥

भातीति । मत्ताः उन्मत्ता ये शिखिनः मयूराः 'शिखावलः शिखी केकी' इत्यमरः । तेषां ये कंठाः तद्वत्कर्बुरं ध्वांतस्य अंधकारस्य जालं समूहः तेन परिरुद्धं व्याप्तं यत् अंबरं आकाशं तत् अर्कः सूर्य एव दीपः प्रदीपः तेन

पश्य भृङ्गपटलासितप्रभं पूर्वतः सपदि निर्गतं तमः ।
यत्करेण जघने हिमांशुना तुद्यमानमिव याति पश्चिमम् ॥ ७१ ॥
क्षीरवारिनिधिना विवर्धता प्लाव्यमानवदसौ निशाकरः ।
उत्पतत्युदयतः शनैः शनैर्हारशुभ्रनिजरश्मिसञ्चयः ॥ ७२ ॥
क्षिप्यमाणघनतामसोत्करं दूरमुत्सरतिमंडलं दिशाम् ।
शीतरश्मिकिरणस्य सर्वतो दातुमन्तरमिव प्रसर्पतः ॥ ७३ ॥

---

इत्यर्थः । तेन सुलभ क्रमो यस्याः एकपक्षसाध्यामित्यर्थः । एतादृशी वृद्धि अद्य मुहुरेव वारंवारमेव विदति प्राप्नोति । पूर्णचन्द्रोदये सर्वासां कलानां क्रमेण झटिति दर्शनेन एकपक्षप्राप्यां वृद्धि सद्य एव लभते इत्यर्थः ॥ ७० ॥

पश्येति । यत् तमः हिमा अंशवः किरणा यस्य स हिमांशुः चंद्रः तेन करेण किरणेन हस्तेन च । जात्यभिप्रायेणैकवचनम् । जघने कटिपुरोभागे तुद्यते पीड्यते इति तुद्यमानमिव पीड्यमानमिवेत्यर्थः । भृगाणां भ्रमराणां पटलं समूहः तद्वदसिता कृष्णा प्रभा कान्तिर्यस्य एतादृशं पूर्वतः पूर्वदिक्तः सपदि सद्यः 'सद्यः सपदि तत्क्षणे' इत्यमरः । निर्गतं निसृतं तमः पश्चिम पश्चिमदिग्भाग याति गच्छति तत् पश्य । यथा केनचित् निजहस्तेन ताड्यमान वस्तु पृष्ठतः गच्छति तद्वत् चन्द्रेण निजकरेण तुद्यमानं तमः पश्चिमायां गच्छतीति तात्पर्यम् ॥ उत्प्रेक्षालङ्कारः ॥ ७१ ॥

क्षीरेति । विवर्धता विवर्धतेऽसौ विवर्धन् तेन अनुदात्तेत्वलक्षणात्मनेपदस्यानित्यत्वात् परस्मैपदम् । क्षीरस्य दुग्धस्य वारिनिधिः समुद्रः भूमिसरोजमितिवत् वारिनिधिशब्दस्य समुद्रे रूढत्वम् । अथवा क्षीरमेव वारि तस्य निधिः पयोधिः तेन प्लाव्यतेऽसौ प्लाव्यमानः तेन तुल्यं प्लाव्यमानवत् । 'प्लुङ् प्लुङ् गतौ' इत्यस्मात् णिजन्तात् कर्मणि शानच् तद्वताद्वतिः । हारवत् शुभ्राः निजानां रश्मीनां सञ्चयः समूहो यस्य एतादृशः असौ निशाकरः चन्द्रः शनैः शनैः मन्दमन्द उदयतः उदयाचलात् । सार्वविभक्तिकः पञ्चम्यास्तसिः उत्पतति ऊर्ध्वमायाति । यथा वर्धमानसमुद्रपतित वस्तु शनैः शनैः ऊर्ध्वमायाति तद्वदयमपीत्यर्थः । उपमालङ्कारः ॥ ७२ ॥

क्षिप्यमाणेति । सर्वतः सर्वस्मिन् भागे प्रसर्पति प्रसरति इति प्रसर्पन् तस्य प्रसर्पतः प्रसरणशीलस्य शीताः रश्मयो यस्य स शीतरश्मिः चंद्रः तस्य किरणस्य । जात्यभिप्रायेणैकवचनम् । अन्तरं अवकाशं दातुमिव दिशां काष्ठानां मण्डलं चक्रवालं कर्तृ क्षिप्यमाणः निरस्यमानः । चन्द्रकिरणेनेति शेषः । घनः निबिडः यस्तामसस्य तमःसम्बन्धी उत्करः समूहः तं दूरं उत्सरति त्यजतीत्यर्थः । सरतिरन्तर्भावितण्यर्थः । उत्प्रेक्षालङ्कारः ॥ ७३ ॥

अन्धकारनिकरं करैरिमं भिन्दतः शशधरस्य मण्डले ।
धूलिपुञ्ज इव भाति तामसः क्षोभवेगपतितः शशाकृतिः ॥ ७८ ॥
गुल्मलीनमलिकर्बुरं तमः क्रष्टुकाम इव शर्वरीकरः ।
सर्वतो विटपजालरन्ध्रकैः प्रेरयत्युदयशेखरः करान् ॥ ७९ ॥
चन्द्ररश्मिनिहतोऽपि तामसः सुप्तकोकिलकुलेन सञ्चयः ।
उल्लसत्कुमुदगन्धसम्भृतैः सावशेष इव भाति षट्पदैः ॥ ८० ॥
सामिसिक्त इव भूरुहस्तले स्थण्डिले निरवशेषमिन्दुना ।
भाति मुक्त इव रश्मिसञ्चयः पत्रजालशतरन्ध्रविच्युतः ॥ ८१ ॥

---

कशीकृतम् । कशधातोर्णिजन्तात् कर्मणि क्तः । 'निष्ठायां सेट्' इति णेर्लोपः । आत्मनः स्वस्य मडल बिंब 'बिंबोऽस्त्री मडलं त्रिषु' इत्यमरः । पुनः पूर्ण पूरयति । उत्प्रेक्षालङ्कारः ॥ ७७ ॥

अधकारेति । इमं अंधकारस्य तिमिरस्य निकरं समुदायं 'स्तोमौघनिकरव्रातवारसंघातसंचयाः ॥ समुदायः समुदयः' इत्यमरः । करैः किरणैः भिनत्तीति भिदन् तस्य शशधरस्य । गगाधरादिवत् शेषिकषष्ठ्या समासः । मंडले मध्ये तमसः अयं तामसः एतादृशः क्षोभस्य वेगः तेन पतितः शशा इव आकृतिर्यस्य एतादृशः धूलेः पांसोः पुंज इव समूह इव भाति शोभते । यथा कश्चित् पुरुषः निजकरैः लोष्टादि भिनत्ति तदा तद्धूलिपुंजः तस्य शरीरे पतति तद्वत् निजकरैः भिद्यमानतमसः सूक्ष्मतदवयवपुंजः शशाभिषेण चन्द्रमसः शरीरे पततीत्यर्थः ॥ उपमालङ्कारः ॥ ७८ ॥

गुल्मेति । उदयस्य उदयाचलस्य शेखरः मस्तकभूषणभूतः उदयं प्राप्त इत्यर्थः । शर्वरीं रात्रिं करोतीति शर्वरीकरः चन्द्रमाः 'कृञो हेतुताच्छील्यानुलोम्येषु' इत्यनेन टप्रत्ययः । गुल्मेषु स्तंबेषु लीनं अलिवत् कर्बुरं तमः अंधकारं क्रष्टुं आकृष्टुं कामो यस्य 'तुं काममनसोरपि' इत्यनेन तुमुनो मलोपः । एतादृश इव सर्वतः विटपानां शाखानां जालानि समूहाः तेषां रंध्रकैः अल्पच्छिद्रैः 'अल्पे' इत्यनेन कप्रत्ययः । करान् किरणान् प्रेरयति । उत्प्रेक्षालङ्कारः ॥ ७९ ॥

चन्द्रेति । चन्द्रस्य हिमांशोः रश्मयः किरणाः तैर्निहतोऽपि नाशितोऽपि तमसः अंधकारस्य अयं तामसः । 'तस्येदं' इत्यण् । संचयः समूहः । सुप्ताः शयिताः ये कोकिलाः पिकाः तेषां कुलेन समूहेन । उल्लसंति विकसंति यानि कुमुदानि कैरवाणि । 'सिते कुमुदकैरवे' इत्यमरः । तेषां गंधः सुगंधः तेन संभृतैः मिलितैरित्यर्थः । एतादृशैः षट्पदैः भ्रमरैः । कोकिलकुलेन षट्पदैश्चेति समुच्चयः स च "गामश्वं पुरुषानह" इत्यादौ चकारं विनापि दृश्यात् । अत्र चकारं विनापि भवत्येव । अवशेषेण सहितः सावशेषः 'तेन सहेति तुल्ययोगे' इति समासः । उर्वरित इव भाति ॥ उत्प्रेक्षालङ्कारः ॥ ८० ॥

सामिसिक्त इति । भूरुहः 'रुहधातोः क्विप् च' इति क्विप् । वृक्षस्य तले मूले इत्यर्थः । स्थंडिले वेद्यां इंदुना चन्द्रेण । निर्गतः अवशेषः यस्मात् निःशेषं यथा स्यात्तथेत्यर्थः । मुक्तः उज्झितः इव पत्राणां जालानि समूहाः तेषां यानि

उल्लसत्सु कुमुदेषु षट्पदाः सम्पतन्ति परितो हिमांशुना ।
भिद्यमानतमसो नभस्तलाद्विच्युता इव तमिस्रबिन्दवः ॥८२॥

तारका रजतभङ्गभासुरा लाजका इव विभान्ति तानिताः ।
दिग्वधूभिरुदयादुदेष्यतो वर्त्मनि ग्रहपतेः समन्ततः ॥ ८३ ॥

मित्रनाशपरिरोदिताश्चिरं मूर्छिता इव विभान्ति दीर्घिकाः ।
सुप्तपद्मविनिमीलितेक्षणा वृन्दशान्तकलहंसकूजिताः ॥ ८४ ॥

---

शतानि अपरिमितानीत्यर्थः । 'शतमनन्तं भवति' इति यास्कोक्तेः । रन्ध्राणि छिद्राणि तेभ्यः विच्युतः गलितः । रश्मीनां किरणानां सचयः सामिसिक्त इव अर्धसिक्त इव 'सामि त्वर्धे जुगुप्सिते' इत्यमरः । 'सामि' इत्यनेन समासः । भाति शोभते । चन्द्रेण निजकिरणसमूहः निःशेषं मुक्तोऽपि वृक्षपत्ररन्ध्रेभ्यः मध्येमध्ये पतितः वृक्षमूले अर्धसिक्त इव प्रतिभाति ॥ उत्प्रेक्षालंकारः ॥ ८१ ॥

उल्लसत्स्विति । षट्पदाः भ्रमराः कुमुदेषु कैरवेषु उल्लसत्सु विकसत्सु इत्यर्थः । हिमांशुः चन्द्रमाः तेन भिद्यमानं नाश्यमानं तमः अन्धकारो यस्मिन् एतादृशात् नभस्तलात् आकाशप्रदेशात् विच्युताः गलिताः तमिस्रस्य तमसः बिन्दवः पृषत इव परितः समन्ततः 'समन्ततस्तु परितः' इत्यमरः । सम्पतन्ति । उत्प्रेक्षालंकारः ॥ ८२ ॥

तारका इति । रजतस्य रूप्यस्य भङ्गाः खण्डाः तद्वत् भासुराः शोभनशीलाः 'भञ्जभासमिदो घुरच्' इति घुरच्प्रत्ययः । तारकाः नक्षत्राणि उदयात् उदयाचलात् उदेष्यतः उदयं प्राप्स्यतः । उत्पूर्वकादिण्धातोः लृटः शत्रादेशः । ग्रहपतेः सूर्यस्य । 'विभावसुर्ग्रहपतिः' इत्यमरः । वर्त्मनि मार्गे समन्ततः सर्वतः दिश एव वध्वः ताभिः तानिताः विस्तारिताः । तनु विस्तारे णिजन्तात् क्तप्रत्ययः । लाजका इव विभान्ति । यथा कश्चित् राज्ञि गच्छति सति नगरवासिस्त्रियः तन्मार्गे मङ्गलार्थं लाजान् विकिरन्ति तद्वत् दिग्वधूभिः उदेष्यतः सूर्यस्य मार्गे तारकाः लाजा इव विकीर्णाः इति तात्पर्यम् । उत्प्रेक्षालंकारः ॥ ८३ ॥

मित्रनाशेति । सुप्तानि मीलितानि यानि पद्मानि कमलानि तान्येव विनिमीलितानि पिहितानि अक्षीणि नेत्राणि यासां ताः । पूर्वं वृन्दं अतिशयितं पश्चाच्छान्तं 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन' इत्यस्य कस्य क्तप्रत्यये इडभावात् 'यस्य विभाषा' इति निष्ठायां इण्निषेधात् । कलं मधुरं अस्फुटं च हंसानां कूजितं शब्दितं यासु एतादृश्यः दीर्घिकाः वाप्यः चिरं चिरकालं मित्रस्य सूर्यस्य सम्पुष्य नाशः अदर्शनं मरणं च तेन प्रयोजककर्त्रा परिरोदिताः । परिपूर्वकात् हेतुमण्णिजन्तात् रुद्धातोः कर्मणि क्तः । मूर्च्छा संजाता यासां ताः मूर्छिताः । तारकादित्वादितच्प्रत्ययः । ता इव विभान्ति । उत्प्रेक्षालंकारः ॥ ८४ ॥

सैकते शशिमरीचिविलेपने रोधसीन्दुकरपुञ्जसंनिभम् ।
राजहंसमसमीक्ष्य कातरा रौति हंसवनिता सगद्गदम् ॥ ८५ ॥
तिग्मरश्मिविरहे सरोजिनि लोकमिन्दुकिरणावगुण्ठितम् ।
नाभिवीक्षितुमिव क्षपागमे मीलयत्यसितवारिजेक्षणम् ॥ ८६ ॥
जृम्भमाणचलपत्रसंहतेरन्तरं कुमुदषण्डसम्पदः ।
संविधातुमिव पद्मसन्ततिः संकुचत्यनतिदूरवर्तिनी ॥ ८७ ॥
भाति बिभ्रदसितोत्पलप्रभं लक्षणं मृगमयं हिमद्युतिः ।
श्यामलावदनबिम्बकान्तिभिर्बद्धमध्य इव रूप्यदर्पणः ॥ ८८ ॥

---

सैकत इति । शशिनः चंद्रस्य मरीचयः किरणाः ते लेपनं लेपनकरणं यस्य एतादृशे सैकते सिकतामये 'सिकताशर्कराभ्यां च' इत्यनुवृत्तौ 'देशेलुबि-लचौ च' इत्यनेन मत्वर्थेऽण्प्रत्ययः । एतादृशे रोधसि तीरे इंदोः चंद्रस्य कराः किरणाः तेषां पुंजः समूहः तेन संनिभं तुल्यं राजहंसं मरालं असमीक्ष्य अनवलोक्य कातरा भीता हंसवनिता हंसस्य स्त्री गद्गदेन वाक्स्खलनेन सहितं सगद्गदं यथा स्यात्तथा रौति शब्दं करोति । मीलितालंकारः । 'मीलितं यदि सादृश्याद्भेद एव न लक्ष्यते' इति लक्षणात् ॥ ८५ ॥

तिग्मेति । सरोजं अस्ति यस्या सा सरोजिनी कमलिनी 'अत इनिठनौ' इति इनिप्रत्ययः । 'ऋन्नेभ्यो ङीप्' इति ङीप् । तिग्माः तीक्ष्णाः रश्मयः किरणाः यस्य सः तिग्मरश्मिः सूर्यः तस्य विरहे वियोगे सति क्षपायाः रात्र्याः आगमः प्राप्तिः तस्मिन् इंदोः चंद्रस्य किरणैः करैः अवगुंठितं व्याप्तमित्यर्थः । लोकं भुवनं 'लोकस्तु भुवने जने' इत्यमरः । नाभिवीक्षितुमिव नावलोकयितुमिव असितं कृष्णं यद्वारिजं कमलं तदेव ईक्षणं नयनं मीलयति संकोचयतीत्यर्थः ॥ उत्प्रेक्षालंकारः ॥ ८६ ॥

जृंभमाणेति । जृंभमाणा विकसंती एतादृशी चलानां चंचलानां पत्राणां संहतिः समुदायो यस्याः एतादृश्याः कुमुदानां चंद्रविकासिकमलानां षंडः समूहः 'षंडं पद्मादिसंघाते न स्त्री स्याद्गोपतौ पुमान्' इति मेदिनी । तस्य संपत् संपत्तिः तस्याः अंतरं अवकाशं 'अंतरमवकाशावधिपरिधानांतर्धिभेद-तादर्थ्ये' इति कोशांतरम् । संविधातुमिव कर्तुमिव अनतिदूरं समीपं वर्तते इति अनतिदूरवर्तिनी समीपवर्तिनीत्यर्थः । पद्मानां सूर्यविकासिकमलानां संततिः परंपरा संकुचति मुकुलीभवतीत्यर्थः । उत्प्रेक्षालंकारः ॥ ८७ ॥

भातीति । असितं कृष्णं यत् उत्पलं कमलं तद्वत्प्रभा कांतिर्यस्य एतादृशं मृगमयं मृगस्वरूपमित्यर्थः । 'चिन्मयं ब्रह्म' इतिवत् स्वार्थे मयट् । स च तद्धिता इति मयुक्पनकरणात् पामरिकेत्यादिवत् कल्प्यते । लक्षणं चिह्नं 'चिह्नं लक्ष्म च लक्षणं' इत्यमरः । बिभर्तीति बिभ्रत् धारयन् 'नाभ्यस्ताच्छतुः'

यौवनोपहितपाण्डुकान्तिना त्वन्मुखेन विजितो निशाकरः ।
लज्जयेव घनमेघसन्ततौ रुद्धरश्मिनिवहो निलीयते ॥ ८९ ॥
अङ्कितः शशमयेन लक्ष्मणा कृष्णमेघशकलं निशाकरः ।
मध्यलग्नमिव मन्दमुद्वहन्निष्पतत्यसितवारिदोदरात् ॥ ९० ॥
उद्धृतद्युतिरिवैव मध्यतो भाति कृष्णमृगलक्षणः शशी ।
कुन्दगौरदशनावलीमिमां वेधसा रचयितुं तव प्रिये ॥ ९१ ॥
त्वन्मुखावजितमण्डलश्रियस्तत्कलङ्कममृतद्युतेरयम् ।
वीक्ष्य शीतकरकान्ततोरणः शोकबाष्पमिव वारि मुञ्चति ॥ ९२ ॥

---

इति मुक्तिपेयः। एतादृशः हिमद्युति चन्द्रमा श्यामलाना श्यामवर्णसुंदरीणां यानि वदनबिंबानि तेषां कांतिभिः त्विड्भिः वद्धः मध्य. मध्यभागो यस्य स रूप्यस्य रजतस्य दर्पण. मुकुर ' दर्पणे मुकुरादर्शौ ' इत्यमरः। स इव भाति शोभते। उपमालंकारः ॥ ८८ ॥

यौवनेति। युवत्या. भाव यौवनम्। युवतिशब्दात् 'हायनांतयुवादिभ्योऽण्' इत्यणि ' भस्याढे तद्धिते ' इति पुंवद्भावे ' अन् ' इति प्रकृतिभावे रूपम्। तेन तारुण्येन उपहिता प्रापिता पाडु. कांतिर्यस्य एतादृशेन त्वन्मुखेन त्वद्वदनेन विजित पराजित. निशाकर चंद्र 'दिवाविभानिशाप्रभा ' इत्यादिना निशा-शब्दोपपदे करोतेट.। लज्जयेव व्रियेव रुद्ध. रश्मीनां किरणानां निवहो समूहो येन एतादृश. सन् घना. निरंतरा. ये मेघा तेषां सततौ परंपरायां निळीयते लीनो भवति। 'निपूर्वात् लीङ् श्लेषणे' इत्यस्मात् लट्। स्वाधिकेन स्वपराजये कृते स्वमुखतिरोधान लोके सुप्रसिद्ध हि। उत्प्रेक्षालंकारः ॥ ८९ ॥

अङ्कित इति। शशमयेन पूर्ववत् स्वार्थे मयट्। शशस्वरूपेणेत्यर्थः। लक्ष्मणा चिह्नेन अंकः संजातोऽस्य अंकित.। तारकादित्वादितच्। निशाकरः चंद्रः। मंद स्वल्पमित्यर्थं। मध्ये लग्न सलग्न एतादृश इव कृष्णमेघस्य घनाघनस्य शकल खड उद्वहन् धारयन् असित कृष्ण. यो वारिद. मेघ. तस्य उदरात् मध्यात् निष्पतति निस्सरति। उत्प्रेक्षालंकार. ॥ ९० ॥

उद्धृतेति। हे प्रिये सीते वेधसा ब्रह्मणा तव इमां पुरोवर्तिनीं कुंदवत् गौराः शुभ्रा. ये दशना. रदा. तेषां आवलीं पंक्ति रचयितुं निर्मातुं मध्यतः मध्यादि-त्यर्थः। आद्यादित्वात् सार्वविभक्तिकः पंचम्यतास्तसिः। उद्धृता निष्कासिता द्युति. कांतिर्यस्य एतादृश इव एष. पुरोवर्ती कृष्णमृग. लक्षणं चिह्नं यस्य एतादृशः शशी चंद्रः भाति ॥ उत्प्रेक्षालंकार. ॥ ९१ ॥

त्वन्मुखेति। त्वन्मुखेन अवजिता निष्कलंकत्वेन पराजिता मंडलश्रीः बिंबशोभा यस्य एतादृशस्य। अमृत द्युतिः कांतिर्यस्य एतादृशस्य चंद्रस्य। स चासौ कलंकश्च तत्कलंकः तम्। तदिति हेतुबोधकं भिन्न पद वा। वीक्ष्य

इति सपदि वदन् वदान्यवर्यः शयनशिलातलमिन्दुपादधौतम्।
अलसतरगतिर्नरेन्द्रकन्यामनुगमयन्मदमन्थरः प्रपेदे ॥ ९३ ॥
अथ सुरतमखे सुखं समाप्ते मदनहुताशनदग्धमानहव्ये ।
चषकमधुनि सन्निविष्टबिम्बं मुखमनयद्दयितासखः स सोमम्॥९४॥
दुहितुरवनिभर्तुरुन्मयूखं मणिचषकं परिमण्डलं विहाय ।
प्रियमुखपरिभुक्तधामवान्छा करकमलं नयति स्म हेमशुक्तिम् ॥९५॥

---

अवलोक्य अथ निकटवर्ती शीतकरकांतस्य चन्द्रकांतस्य तोरणः वहिद्वारं चन्द्रकांतघटितबहिद्वारमित्यर्थः । शीकरस्य शीकसमधि बाष्प अश्रु इव वारि उदक मुञ्चति उत्सृजति॥ उत्प्रेक्षालंकारः ॥ ९२ ॥

इतीति। इति पूर्वोक्तप्रकारेण वदन् ब्रुवन् वदान्यानां स्थूललक्ष्याणां वर्यः श्रेष्ठः 'स्युर्वदान्य, स्थूललक्ष्य.' इत्यमरः। अलसतरा अतिमन्दा गतिः गमनं यस्य अतएव मदेन मंथर, मदः अर्थात् राम. सपदि सद्यः इन्दोः चन्द्रस्य पादैः धौत क्षालित तं, शीतलमित्यर्थः. । एतादृशं शयनसमधि शिलातलं तत् कर्म। नरेन्द्रस्य जनकस्य कन्या सीता अनुगमयन् प्रापयन् प्रपेदे प्राप । प्रपूर्वात् पद्यतेर्लिट् एत्वाभ्यासलोपौ। अनुप्रासालंकारः। पुष्पिताग्रावृत्तम् 'अयुजिनयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात् ॥ ९३ ॥

अथेति । अथ पूर्वोक्तप्रकारानंतरं मदन एव हुताशन अग्निः तेन दग्धं मानरूपं हव्यं हविर्द्रव्यं यस्मिन् एतादृशो सुरतमेव मख. यज्ञ. तस्मिन् सुखं यथा स्यात्तथा समाप्ते सति अवसिते सतीत्यर्थः। दयिताया सीतायाः सखा मित्र 'राजाह सखिभ्यष्टच्' इति टच्। सीतासहित इत्यर्थः। सः रामचन्द्र नितरां सन्निविष्टं प्रतिफलितं बिंबं मुखबिंबं यस्मिन् एतादृशं चषकस्य पानपात्रस्य सम्बधि मधु मद्य 'मधु मद्ये पुष्परसे' इत्यमरः। तद्रूपं सोमं सोमरसं मुखं वक्त्रं अनयत् प्रापयत्। यज्ञे सोमपानं भवति तद्वत्सुरतयज्ञे मद्यरूपं सोमं अपिबदित्यर्थः.। रूपकालंकारः। पुष्पिताग्रावृत्तम्। लक्षणं तूक्तम् ॥ ९४ ॥

दुहितुरिति। अवनेः पृथ्व्याः भर्तुर्जनकस्य दुहितुः कन्यकायाः सीतायाः प्रिय. श्रीरामचन्द्रः तस्य परिभुक्तं भोजनाधिकरणं पानाधिकरणमित्यर्थः। 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' इति अधिकरणे क्तः। यत् धाम स्थानं 'धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः' इति मेदिनी। तस्य वान्छा इच्छा यस्याः परित. मण्डलं यस्य तत्परिमण्डलं उद्गताः मयूखाः किरणाः यस्य तत् उन्मयूखं एतादृशं मणीनां हीरकादीनां चषकं पानपात्रं विहाय। अवमांश्चिन्तयन्ती जहातिः। त्याजयित्वेत्यर्थः। हेमशुक्तिं करकमलं प्रति नयतिस्म। मणिचषकेण पाने तु प्रियभुक्तपात्रेण पानं न संभवति अतः हेमशुक्तिं करकमले नयतिस्मेत्यर्थः। पुष्पिताग्रावृत्तम् ॥ ९५ ॥

नियतमिह पतन्ति दन्तधारा मदमदनोद्धतयोरितीव भीत्या ।
अधरकिसलये विहाय यूनोर्मधु पिबतोर्नयनान्यवाप रागः ॥ ९६॥
मुहुरपि मधुपो विवृद्धतृष्णो न विरमति स्म पिबन् सुगन्धि हृद्यम् ।
युवतिमुखमसंशयं यतो यत् सरसिरुहं परमार्थतस्तदेतत् ॥ ९७ ॥
अचकमत मधु प्रियामुखेन क्षितिपसुतः प्रणयादसौ वितीर्णम् ।
अधरमितवतो व्रणस्य दाहात् स्फुटरचितभ्रुकुटिर्मधुस्रवेण ॥ ९८॥
इति सपदि निशामतीयतुस्तौ प्रविधुतकौसुमभक्तिसूत्रशेषम् ।
रतिकलहकचग्रहेण माल्यं विलुलितकेशसमर्पितं दधानौ ॥ ९९ ॥

---

नियतमिति । रागः रक्तिमा कर्ता । मदः गर्वः मदनश्च ताभ्यां उद्धतयोः उन्मत्तयोः मधु मद्यं पिबतोः प्राश्नतोः यूनोः तरुणयोः सीतारामचन्द्रयोः इह अधरकिसलययोः दन्तानां धाराः परंपरा नियतं नियमेन पतन्ति पतिष्यन्तीत्यर्थः । 'वर्तमानसामीप्ये भविष्यति लट्' । इति भीत्येव भयेनेव अधरावेव किसलये पल्लवौ । 'पल्लवोऽस्त्री किसलयं' इत्यमरः । विहाय त्यक्त्वा नयनानि नेत्राणि अवाप प्राप ॥ उत्प्रेक्षालङ्कारः । पुष्पिताग्रावृत्तम् ॥ ९६ ॥

मुहुरिति । यतः यस्मात् कारणात् विवृद्धा तृष्णा अभिलाषो यस्य एतादृशः मधुपः भ्रमरः सुष्ठु गन्धो यस्य तत् सुगन्धि 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' इत्यादिना समासान्तः इदादेशः । एतादृशं हृद्यं हृदयस्य प्रियं 'हृदयस्य प्रियः' इत्यनेन यत्प्रत्ययः । यत् युवतेः स्त्रियाः मुखं वक्त्रं मुहुरपि वारंवारमपि पिबन् प्राश्नन् न विरमति स्म न विरराम । तत् तस्मात् कारणात् एतत् पुरोवर्ति असंशयं संशयाभावः यथा स्यात्तथा परमार्थतः वस्तुतः इत्यर्थः । सरसिरुहं कमलम् । अस्तीति शेषः । वृत्तं प्राग्युक्तम् ॥ ९७ ॥

अचकमतेति । क्षितिपस्य दशरथस्य सुतः पुत्रः असौ श्रीरामचन्द्रः प्रणयात् प्रेम्णा प्रियायाः सीतायाः मुखं तेन वितीर्णं दत्तं मधु मद्यं अचकमत ऐच्छत् । अधरं अधरोष्ठं इतवतः प्राप्तवतः । इण्धातोः क्तवतुप्रत्ययः । व्रणस्य ईर्मस्य 'व्रणोऽस्त्रियामीर्ममरु' इत्यमरः । मधुस्रवेण मधुद्रवेण दाहात् हेतोः स्फुटा स्पष्टा रचिता कृता भ्रुकुटिः येन एतादृशः आस । अथवा स्फुटरचितभ्रुकुटिः इत्यादिविशेषणविशिष्टः क्षितिपसुतः प्रियामुखेन मधु अचकमतेत्यन्वयः ॥ ९८ ॥

इतीति । इति पूर्वोक्तप्रकारेण प्रविधुताः चलिताः कौसुमाः कुसुमसंबन्धिनः भक्तयो भागा यस्मिन् अतएव सूत्रं शेषं यस्य तत् प्रविधुतकौसुमभक्तिसूत्रशेषं रतेः संबन्धी यः कलहः तेन यः कचग्रहः केशग्रहणं तेन विलुलिताः चञ्चलाः ये केशाः कचाः तत्र समर्पितं माल्यं मालां दधानौ धारयन्तौ तौ सीतारामचन्द्रौ । सपदि सद्यः । 'सद्यः सपदि तत्क्षणे' इत्यमरः । निशां रात्रिं अतीयतुः अतिक्रान्तवन्तौ । अतिपूर्वकात् इण्धातोः लिट् । पुष्पिताग्रावृत्तम् ॥ ९९ ॥

अथ हृदयङ्गमध्वनितवंशकृतानुगमै-
रनुगतवल्लकीमृदुतरक्वणितैर्ललनाः ।
तमुषसि भिन्नषड्जविषयीकृतमन्द्ररवैः-
शयितमबोधयन् विविधमङ्गलगीतिपदैः ॥ १०० ॥
हृदयनिपीडनोद्धृतपयोधरकुङ्कुमया
रतिषु दधानया दशनखण्डितमोष्ठमणिम् ।
चिरकृतजागरारुणितमन्थरलोचनया
शयनममुच्यत प्रियमनु प्रमदोत्तमया ॥ १०१ ॥

इति कुमारदासस्य कृतौ जानकीहरणे महाकाव्ये
सम्भोगवर्णनं नामाष्टमः सर्गः समाप्तः ॥ ८ ॥

---

अथेति । अथ शय्यातिक्रमणानन्तरं ललनाः गीतिकुशलाः स्त्रियः हृदयगमानि 'गमश्च' इत्यनेन खच्प्रत्ययः । ध्वनितानि येषां एतादृशाः ये वंशाः वेणवः सुषिराणीति यावत् । 'वंशादिकं तु सुषिरं' इत्यमरः । तैः कृतः अनुगमः अनुगमनं येषां तैः । अनुकूलसुषिरध्वनिभिर्मिश्रितैरित्यर्थः । अनुगताः गेयानुकूलानि वल्लक्याः वीणायाः मृदुतराणि कोमलानि क्वणितानि शब्दितानि येषु तैः भिन्नाः ये षड्जाः षड्जादिसप्तस्वराः ते विषयीकृताः मन्द्ररवैः मधुरध्वनिभिर्येषु षड्जादिसप्तस्वरानुगुणैरित्यर्थः । न तु विस्वरैरिति यावत् । एतादृश विविधानि अनेकप्रकाराणि यानि मङ्गलगीतिपदानि मंगलगेयपदानीत्यर्थः । तैः उषसि प्रत्युषसि शयितं सुप्तं तं रामचन्द्रं अबोधयन् जागरितं चक्रुरित्यर्थः । नर्दटकं वृत्तम् । 'हयदशभिर्नजौ भजजला गुरुनर्दटकम्' इति लक्षणात् ॥ १०० ॥

हृदयेति । रतिषु सुरतेषु हृदयस्य यन्निपीडनं ताडनं तेन उद्धृतं निःसारितं पयोधरयोः स्तनयोः कुङ्कुमं यस्याः तया दशनैः दन्तैः खण्डितः छिन्नः क्षतितः इत्यर्थः । यः ओष्ठ एव मणिः ओष्ठः मणिरिव इति वा तं दधानया धरन्त्या चिरं चिरकालं कृतः यो जागरः जागरणम् । जागर्तेर्भावे घञ् । जाग्रोऽविचिण्णलिति गुणः । तेन अरुणिते आरक्ते मन्थरे मन्दे च लोचने नेत्रे यस्याः एतादृश्या प्रमदासु स्त्रीषु उत्तमया श्रेष्ठया सीतयेत्यर्थः । प्रियं रामचन्द्रं अनु 'तृतीयार्थे' इत्यनेन कर्मप्रवचनीयत्वात् 'कर्मप्रवचनीययुक्ते द्वितीया' इत्यनेन द्वितीया । रामचन्द्रेण सहेत्यर्थः । शयनं शय्या अमुच्यत उज्झितेत्यर्थः । मुच्लृ मोक्षणे कर्मणि लङ् । नर्दटकं वृत्तम् ॥ लक्षणं तु पूर्वत्र श्लोके उक्तम् ॥ १०१ ॥

इति श्री ६ गुलपदवाक्यप्रमाणपारावारीणमहामहोपाध्यायपदव्य-
लङ्कृतपंडितप्रवरश्रीधरशास्त्रिटकराभिधानामकश्रीमद्गोपालशास्त्रि-
पंतेवासिना लिगुडकरोपाभिधेन वासुदेवसुतनारा-
यणशर्मणा विरचितायां महोत्साहाख्यजा-
नकीहरणकाव्यटीकायामष्टमः सर्गः
समाप्तः ॥ ८ ॥

# नवमः सर्गः ।

इति प्रवृत्तस्य सुतस्य केषुचिद्गतेषु मासेषु सुखेन भूपतिः ।
पुरं प्रतस्थे वनितापरिग्रहैस्त्रयं सुतानामितरत्समस्य सः ॥ १ ॥
उपेत्य पत्या सह शोकसम्पदा कलत्रभारेण च मन्थरक्रमा ।
पितुः प्रयाणाभिमुखी भुवः सुता ततान पादावुदबिन्दुभिर्दृशोः ॥ २ ॥
असावपत्यं गुणपक्षपातिनीं मतिं समालम्ब्य गुणैः पुरस्कृतम् ।
जगौ ततः साधु गुरुर्गरीयसीं गिरं सतीनामुचितव्रताश्रयाम् ॥ ३ ॥

---

। श्रीराधाकृष्णाय नमः ॥ अथ पूर्वसर्गे श्रीसीतारामचंद्रयोः मिथिलायामेव संभोग वर्णयं अस्मिन् सर्गे राज्ञो दशरथस्य पुत्रैः सह अयोध्यापुरीप्रयाणमाह इतीति । इति अष्टमसर्गोक्तप्रकारेण प्रवृत्तस्य संयोगे इति शेषः । सुतस्य श्रीरामचंद्रस्य । 'षष्ठी शेषे' इति संबंधसामान्ये षष्ठी । केषुचित् मासेषु सुखेन आनंदेन गतेषु सत्सु । सुखेनेति प्रकृत्यादित्वात्तृतीया । भूपतिः सः दशरथः वनिताः स्त्रियः च परिग्रहाः भृत्यादयः च तैः सह इतरत् रामेतरदित्यर्थः सुतानां पुत्राणां त्रयं तृतयं समस्य संक्षिप्य रामेण सह स्वीकृत्येत्यर्थः । पुरं अयोध्यां प्रतस्थे 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् ॥ अस्मिन् सर्गे पदूपर्श्लोकपर्यंतं वंशस्थं वृत्तम् । तदुक्तं 'जतौ तु वंशस्थमुदीरितं जरौ' इति ॥ १ ॥

उपेत्येति । कलत्रस्य श्रोण्याः यो भारः तेन 'कलत्रं श्रोणिभार्ययोः' इत्यमरः । मंथरः मंदः क्रमः पादविक्षेपो यस्याः एतादृशी प्रयाणस्य अभिमुखी भुवः पृथिव्याः कन्या सीता पत्या सह श्रीरामचंद्रेण सह उपेत्य प्राप्य शोकस्य वियोगजन्यस्य संपत् तया अतिशोकेनेत्यर्थः । हेतौ तृतीया । दृशोः नेत्रयोः उदस्य उदकस्य बिंदुभिः पृषतैः 'मंथौदनसक्तुबिंदु-' इत्यादिना उदकस्य उदादेशः । पितुः तातस्य जनकस्य पादौ चरणौ ततान विस्तारयामास । शोकाश्रुभिः नतिसमये पितुः पादौ आर्द्रीचकारेत्यर्थः ॥ २ ॥

असाविति । ततः सीतानत्यनंतरं असौ गुरुः जनकः गुणैः सद्गुणैः पुरस्कृतं अग्रतः कृतं सर्वसद्गुणसंपन्नमित्यर्थः । अपत्यं तोकं सीतारूपं कन्यां गुणानां सद्गुणानां पक्षः परिग्रहः तं पतति तच्छीला 'सुप्यजातौ' इति णिनिः । तां मतिं बुद्धिं समालंब्य समाश्रित्य तादृशीं बुद्धिं निश्चित्येत्यर्थः सतीनां साध्वीनां 'सती साध्वी पतिव्रता' इत्यमरः । उचितं योग्यं यद्व्रतं नियमः स आश्रयो यस्याः । पतिव्रतायतविषयिणीमिति यावत् । अतएव अतिशयेन गुर्वी इति गरीयसी ताम् । गुरुशब्दात् 'द्विवचनविभज्य' इत्यनेन ईयसुनि 'प्रियस्थिर' इत्यादिना गरादेशो 'उगितश्च' इति ङीप् । एतादृशीं गिरं वाणीं साधु यथा स्यात्तथा जगौ गै शब्दे लिट् । अनुप्रासालंकारः ॥ ३ ॥

परः प्रकर्षो वपुषः समुन्नतिर्गुणस्य तातो नृपतिर्नवं वयः ।
इति स्म मा मानिनि मानमागमः पतिप्रसादोन्नतयो हि योषितः ॥४॥
स्त्रियो न पुंसामुदयस्य साधनं त एव तद्धामविभूतिहेतवः ।
तडिद्वियुक्तोऽपि घनः प्रजृम्भते विना न मेघं विलसन्ति विद्युतः ५
गतापि भर्त्रे परिकोपमायतं गिरः कृथा मा परुषार्थदीपनीः ।
कुलस्त्रियो भर्तृजनस्य भर्त्सने परं हि मौनं प्रवदन्ति साधनम् ६
पतिव्रता वश्यमवश्यमङ्गना करोति शीलेन गुणस्पृहं पतिम् ।
विनष्टचारित्रगुण्या गुणैषिणः पराभवं भर्तुरुपैति दुस्तरम् ॥ ७ ॥

---

४ पर इति । मानः कुलाद्यभिमानः अस्ति अस्याः सा मानिनी तत्सम्बुद्धिः हे मानिनि । वपुषः शरीरस्य परः श्रेष्ठः प्रकर्षः उत्कर्षः तथा गुणस्य जात्येकवचनं गुणानामित्यर्थः । समुन्नतिः औन्नत्यं तातः पिता नृपतिः । जनकः नवं नूतनं वयः तारुण्यमित्यर्थः । इति एवम्प्रकारेण हेतौ वा । मानं अभिमानं मास्म आगमः न प्राप्नुहीत्यर्थः । गमृधातोः 'स्मोत्तरे लङ् च' इत्यनेन मास्मोपपदे सर्वलकारापवादो लङ् 'नमाङ्योगे' इत्यनेन अडागमनिषेधः । कुतो न गर्वः कर्णीयः इत्यत आह–पतीति । हि योषितः स्त्रियः पत्युः धवस्य प्रसादः स एव उन्नतिर्यासां एतादृश्यः भवन्तीति शेषः । इतरोन्नत्यपेक्षया पतिप्रसादोन्नतिरेव श्रेयस्करीत्यर्थः । काव्यलिङ्गमलङ्कारः 'समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनं' इति लक्षणात् ॥ ४ ॥

५ पत्यनुकूलत्वेन वर्तनेन उन्नतौ साध्यायां अन्वयव्यतिरेकेण पत्युरेव प्राधान्यं दर्शयति–स्त्रिय इति । पुंसां पुरुषाणां उदयस्य उत्कर्षस्य साधनं साधनकरणं 'करणाधिकरणयोश्च' इति ल्युट् । स्त्रियः न भवन्तीति शेषः । ते एव पुरुषा एव तासां स्त्रीणां यद्धाम तेजः विभूतिः ऐश्वर्यं च तयोः हेतवः कारणानि भवन्ति । तदेव द्रढयति–तडिदिति । तडिता विद्युल्लतया वियुक्तोऽपि विरहितोऽपि घनः मेघः प्रजृम्भते आविर्भवति विद्युतस्तु तडितस्तु मेघं विना न विलसति न प्रकाशति ॥ अर्थान्तरन्यासालङ्कारः ॥ ५ ॥

६ एवं पतिप्रसादस्य अवश्यसाध्यत्वं उपदिश्य इदानीं पत्यौ वर्तनमुपदिशति–गतापीति । आयतं दीर्घं महान्तमित्यर्थः । परिकोपं क्रोधं गतापि प्राप्तापि भर्त्रे पत्ये परुषः कठोरः यः अर्थः तस्य दीपिनीः प्रकाशयित्रीः परुषार्थप्रतिपादिका इत्यर्थः । गिरः वाणीः मा कृथाः न कुरु इत्यर्थः । अत्रापि कृधातोः माङ्योगाल्लोडर्थे लुङ् उभौनि सिचः क्तित्वे 'तनादिभ्यस्तथासोः' इत्यनेन सिचो लुक् अडागमनिषेधश्च । हि यस्मात् कारणात् भर्तृजनस्य 'कर्तृकर्मणोः कृति' इति कर्तरि षष्ठीयम् । भर्त्सने तर्जने भर्तृजनकर्तृकतर्जने सतीत्यर्थः । कुलस्त्रियः कुलीनाः स्त्रियः मौनं मूकत्वं परं श्रेष्ठं साधनं प्रवदन्ति कथयन्ति । भर्त्रा भर्त्सने कृते सति मौनं कार्यं प्रत्युत्तरं न देयमिति तात्पर्यम् ॥ ६ ॥

७ पतिव्रतेति । पत्यौ भर्तरि नियमो यस्याः सा पतिव्रता पतिसेवातत्परा साध्वीत्यर्थः । अङ्गना स्त्री गुणान् नम्रत्वादिगुणान् स्पृहयति इच्छतीति गुण-

अलं त्वयि व्याहृतिविस्तरेण मे कुरुष्व तच्चरितं त्वदाश्रयम् ।
श्रुतिं प्रयातं जरसैव जर्जरं सहस्रधेदं हृदयं न दारयेत् ॥ ८ ॥
अयं त्वदेकप्रवणो मनोरथो वृथाऽद्य दैवादपि नाम नो भवेत् ।
इति प्रवक्तुर्जरतो निरासिरे निगृह्य कण्ठं वचनानि मन्युना ॥९॥
उदग्रभासः शिखया शिखामणेः स्रजा च धम्मिल्लकिरीटदघ्नया ।
प्रमृज्य पादौ जनकस्य जम्पती क्षमादयातामथ लम्भिताशिषौ १०

स्पृहः तम् । मूलविभुजादित्वात् कः इगुपधेति क विधाय शेषषष्ठ्या समासो वा। गुणाभिलाषिणमिति यावत् । एतादृशं पतिं शीलेन अवश्यं वश्यं वशंगत 'वशंगतः' इति यत्प्रत्ययः । करोति । वैपरीत्येऽनिष्टमाह–विनष्टेति । विनष्टाः चारित्रं शील गुणाश्च यस्याः एतादृशी । गुणान् इच्छति तच्छीलः गुणैषी 'सुप्य-जातौ' इति णिनि. । तस्मात् भर्तुः पत्युः सकाशात् दुस्तर दुःखेन तरणयोग्य "ईषद्दुःसुषु' इति खल् । पराभव पराजयं अप्रीत्यादिक उपैति प्राप्नोति ॥ ७ ॥

अलमिति । त्वयि त्वद्विषये मे मम व्याहृतीनां भाषणाना विस्तरः तेन "व्याहार उक्तिर्लपित ' इत्यमरः । अल निषिद्धं उपयोगो नास्तीत्यर्थः। व्याहृतिविस्तरेणेति गम्यमानक्रियाकरणे 'अल भूषणपर्याप्तिः' इत्याद्यमरः । त्व आश्रयो यस्य एतादृश यच्चरितं श्रुतिं श्रवणं ममेति शेषः । प्रयातं सत् प्राप्तं सत् जरसैव वृद्धत्वेनैव जर्जरं शिथिल इदं हृदय अंतःकरण सहस्रधा सहस्रप्रकार 'अधिकरणविचालेति' धाप्रत्ययः । न दारयेत् न विदारयेत् । तत् चरित्रं कुरुष्व स्वीकुरु इत्यर्थः । पतिव्रताधर्ममाचरेत्यर्थः । 'विधिनिमन्त्रणे–' इत्यादिना कृधातोः विधौ लोट् ॥ ८ ॥

अयमिति । त्वय्येव एकः प्रवणः प्रह्वः 'प्रवण क्रमनिम्नोर्व्यां प्रह्वे' इत्यमरः । त्वदेकायत्त इत्यर्थ. । अयं पूर्वोक्त. पातिव्रत्यस्वीकाररूपः मनोरथोऽभिलाषः । अद्य साम्प्रतम् । दैवादपि अवशेनापीति यावत् । वृथा, मुधा निरर्थक इति यावत् । नो नाम भवेत् माभूदित्यर्थ.।नामेति संभावनायां । इति पूर्वोक्तप्रकारेण प्रवक्तुः भाषितुः जरतः जीर्णस्य, वृद्धस्य जनकस्येत्यर्थः । 'जीर्यतेरतृन्' इति जृधातोरतृन्प्रत्ययः । मन्युना शोकेन कर्त्रा 'मन्युशोकौ तु शुक् स्त्रियाम्' इत्यमरः । कठ निगृह्य अवरुध्य वचनानि भाषणानि कर्माणि निरासिरे निरस्तानीत्यर्थ. । निःपूर्वकात् 'असु क्षेपणे' इत्यस्मान् कर्मणि लिट् इरेजादेशश्च ॥ ९ ॥

उदग्रभास इति । अथ जनककृतोपदेशानतर जम्पती जायापती सीतारामौ । राजदन्तादित्वात् जायाशब्दस्य ज आदेशः । उदग्रा उच्चा भाः कान्तिर्यस्य स उदग्रभाः, तस्य शिखामणेः चूडामणे. शिखया ज्वालया तेजसेत्यर्थः । च धम्मिल्लः संयतकचाः स एव किरीट अथवा सीताया धम्मिल्लः रामचंद्रस्य किरीटः तत्र दघ्ना सक्तया । सक्तयेत्येव पाठः साधुरिति भाति । स्रजा मालया । जनकस्य मैथिलस्य पादौ चरणौ प्रमृज्य संशोध्य लम्भिता

कृतो वियोगेन शुचः समुद्भवः समर्पितः साधुवरेण सम्मदः ।
मनस्यवस्थाननिमित्तमीशितुः क्षणं विवादानिव तस्य चक्रतुः ११

हलायुधाभस्य सकाहलो रवः पयोधिनिर्घोषगभीरभैरवः ।
ततः प्रगल्भाहतभेरिसम्भवः प्रकाशयामास गतिं समन्ततः १२

गजेन्द्रघण्टाघटितश्च निःस्वनः करेणुकाबृंहितबृंहितो मुहुः ।
भयं वितन्वन् भवनेषु पक्षिणां दिशः ससर्पाथ समं समुद्धतः १३

समारुरोहाथ रथं महारथः सहेमचित्रं सह राजकन्यया ।
दिनादिसन्ध्यानुगतां पिशङ्गितां स्वरश्मिदीप्त्येव दिवं दिवाकरः १४

---

र्पिता आशीः आशीर्वादो याभ्याम् । क्षमू धातोर्णिजन्तात् कर्मण्यये लभे-श्च ' इति नुमागमः । एतादृशौ तौ क्षपात् गृहात् ' क्षयो रोगान्तरे वेश्मकल्पान्तापचयेषु च ' इति मेदिनी । अयातां अगच्छताम् । या प्रापणे लङ् ॥१०॥

कृत इति । वियोगेन विरहेण कृत उत्पादितः शुचः शोकस्य समुद्भवः उत्पत्तिः । साधुः उत्तमो यो वरः जामाता तेन समर्पितः उत्पादितः सम्मदः प्रमोदः । ' प्रमोदामोदसम्मदाः ' इत्यमरः । ईशितुः लोकनियन्तुः तस्य जनकस्य मनसि अन्तःकरणे अवस्थानं स्थितिः निमित्तं कारणं यस्मिन् । विवादकर्म-विशेषणमिदम् । क्षणं क्षणमात्रं विवादान् चक्रतुरिव अहंपूर्विकया सम्मद-शुक्समुद्भवौ विवादं चक्रतुरित्यर्थः । उत्प्रेक्षालंकारः ॥ ११ ॥

हलायुधेति । ततः प्रस्थानानन्तरं काहलेन ( कर्णा इति लोके ) मङ्गल्य-ध्वनिनेत्यर्थः । सहितः सकाहलः । पयोधिः समुद्रः तस्य यो निर्घोषः ध्वनिः तद्वत् गभीरः गंभीरः भैरवः भयंकरश्च । प्रगल्भं आहता ताडिता या भेरी दुन्दुभिः तस्याः सकाशात् सम्भवो यस्य एतादृशः । समन्ततः परितः यो रवः ध्वनिः सः हलः सीरः आयुधं यस्य स हलायुधः बलदेवः तद्वदाभा कान्ति-र्यस्य एतादृशस्य दशरथस्य गतिं गमनं प्रकाशयामास भेर्यादिनिस्वनेन दशरथस्य प्रयाणमनुमितमित्यर्थः ॥ १२ ॥

गजेन्द्रेति । अथ प्रयाणभेर्यभिघातानन्तरं गजेन्द्राणां घटाः निनादाः घटि-तः मिश्रितः मुहुः पुनः पुनः करेणुकानां हस्तिनीनां बृंहितानि गर्जितानि तैर्बृंहितः बृंहितः । अत्र ' बृंहितं करिगर्जितम् ' इति कोशात् बृंहितपदेनैव विशिष्टार्थलाभेऽपि करेणुकापदसान्निध्येन बृंहितशब्दः केवलगर्जितपरः ' विशि-ष्टवाचकानां पदानां सति विशेषणसमभिव्याहारे विशेष्यमात्रपरता ' इति न्यायात् । अतएव ' सरीधर्वैर्मांसलपूर्णरवैः ' इति कालिदासोऽपि संगच्छते । भवनेषु गृहेषु कुलायेष्वित्यर्थः । पक्षिणां पतत्त्रिणां भयं भीतिं वितन्वन् विस्तारयन् समुद्धतः उदीर्णः निःस्वनः ध्वनिः दिशः काष्ठाः समं एककालाव-च्छेदेनेत्यर्थः । क्रियाविशेषणमिदम् । ससर्प जगाम व्यापेत्यर्थः ॥ १३ ॥

समारुरोहेति । अथ प्रयाणध्वनिविसर्पणानन्तरं दिवाकरः सूर्यः ' दिवाविभा' इत्यादिना कर्तरि टप्रत्ययः । दिनस्य दिवसस्य आदिः आरंभः तत्सम्बन्धिनी

शिरःप्रदेशस्थसमुद्गपेटिकागृहीतवीणाशुकपञ्जरादयः ।
सवेत्रहस्तैः स्थविरैरधिष्ठिताः स्त्रियोऽप्यनुस्यन्दनमत्यगुर्मुदा १५
मदान्धमातङ्गघटाद्रिसङ्कटे परिक्कणन्ती चलकायनिम्नगा ।
तरङ्गिता वल्गुतुरङ्गरङ्गितैः पुरः प्रतस्थे पुरुहूततेजसः ॥ १६ ॥
स्वदृष्टिरोधि श्रवणाग्रमारुतै रजो रथोत्थं यदि नाहरिष्यत ।
विनिर्गताभिर्न पुरो मदस्रुतां घटाभिरद्रक्ष्यत वर्त्म दन्तिनाम् ॥१७॥

---

या संध्या पितृप्रसूः तया अनुगतां युक्तां अतएव पिशङ्गितां पिङ्गलाम् । 'पिशङ्गो कद्रुपिङ्गलौ' इत्यमरः । दिवं अंतरिक्षं 'द्योदिवौ द्वे स्त्रियामभ्रं' इत्यमरः । स्वस्य रश्मयः किरणाः तेषां दीप्त्येव कान्त्येव महारथः 'एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् ॥ शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतः' । एतादृशः रामचंद्रः हेम्नः सुवर्णस्य चित्राणि आलेख्यानि तैः सह वर्तमानं सहेमचित्रं एतादृशं रथं स्यंदनं राज्ञः जनकस्य कन्या सीता तया सह समारुरोह ॥ उपमालंकारः ॥ १४ ॥

शिर इति । शिरसः प्रदेशः भागः तत्र तिष्ठतीति शिरःप्रदेशस्थाः 'स्थः' इति योगविभागात् कप्रत्ययः । समुद्गाः सपुटकाः पेटिकाः मञ्जूषाश्च यासां अथवा शिरःप्रदेशस्थाः समुद्गकानां पेटिका यासाम् । तथा वीणा वल्लकी शुकपंजराः कीरपञ्जराः वीणाशुकपंजराः आदयो येषां एतादृशाः सर्वे उपचाराः गृहीताः वीणाशुकपंजरादयो याभिः । वेत्रैः वेतसैः सहिताः सवेत्राः तथाभूताः हस्ताः कराः येषां तैः । हस्तगृहीतवेत्रयष्टिकैरित्यर्थः । स्थविरैः वृद्धपुरुषैः । 'प्रवयाः स्थविरो वृद्धः' इत्यमरः । अधिष्ठिताः रक्षिता इति यावत् । एतादृश्यः स्त्रियोऽपि दास्यादयोऽपि मुदा हर्षेण अनुस्यंदनं रथमनुलक्ष्यीकृत्येत्यर्थः । 'अनुर्यत्समया' इत्यव्ययीभावः । अत्यगुः अत्यगमन् इत्यर्थः । इण्धातोः लुङि 'इणो गा लुङि' इति गादेशो 'गातिस्थेति' सिचो लुकि पररूपे रूपमिदम् ॥ अनुप्रासालंकारः ॥ १५ ॥

मदेति । मदेन अंधाः ये मातङ्गाः हस्तिनः तेषां घटा घटना 'करिणां घटना घटा' इत्यमरः । स एव अद्रिः पर्वतः तस्य सङ्कटे सबाधे 'संकटं ना तु संबाधे' इत्यमरः । परिक्कणन्ती ध्वनंती । वल्गूनि सुंदराणि यानि तुरंगाणां अश्वानां रंगितानि गतिविशेषाः तैः हेतुभिः 'रगि लघि' इत्यादिप्रपठितरगिधातोर्गत्यर्थकस्य 'नपुंसके भावे क्तः' इति क्तप्रत्यये रंगितेति रूपम् । तरंगाः भंगाः संजाताः यस्याः । तरगशब्दात्तारकादित्वादितच्प्रत्ययः । एतादृशी चलं सैन्यं कायो देहो यस्याः सा चलकाया चलस्वरूपेति यावत् । या निम्नगा नदी सा पुरुहूतः इंद्रः तद्वत्तेजो यस्य स पुरुहूततेजाः जनकः तस्य पुरः नगरात् मिथिलाया इत्यर्थः । प्रतस्थे ॥ रूपकालंकारः ॥ १६ ॥

स्वदृष्टीति । पुरः नगर्याः मिथिलायाः विनिर्गताभिः–निर्याताभिः 'मदं दानं स्रवंतीति मदस्रुतः 'गंडः कटो मदो दानं' इत्यमरः । तेषां मदस्रुताम् ।

व्यतीतरथ्येऽथ रथे कपोलयोर्विलासवत्या लसदंशुजालयोः ।
पपात तस्याः पुरगृह्यदीर्घिकासमीरणानर्तितपद्मजं रजः ॥ १८ ॥
वराङ्गना प्रस्तरभेदकोटिभिर्हतस्य चक्रे चलनं वरूथिनः ।
पिधाय यत्तच्चलनं पथि प्रियं तमाललम्बे बलसन्निधावपि ॥ १९ ॥
रथध्वनिप्रापितसम्मदं गवां कुलं समुत्पुच्छयमानमुन्मुखम् ।
उदग्रकर्णं परिधावदेकतो ददर्श सीताऽथ वनान्तवर्तिनी ॥ २० ॥

---

मदस्राविणामित्यर्थः । मदशब्दे उपपदे स्रुधातोः 'क्विप् च' इति क्विप् । एतादृशां दन्तिनां हस्तिनां घटाभिः घटनाभिः' समूहैरित्यर्थः । श्रवणानां कर्णानां अग्राणि प्रान्ताः तत्संबंधिनो ये मारुताः वाताः तैः करणैः स्वेषां दृष्टीः अभीक्ष्णं रुणद्धीति स्वदृष्टिरोधि । 'बहुलमाभीक्ष्ण्ये' इति णिनिः । एतादृशां रथेभ्यः स्यंदनेभ्यः उत्थं उत्पन्नं रजः धूलिः यदि न अहरिष्यत तर्हि वर्त्म मार्गः न अद्रक्ष्यत् । श्रवणमारुतैः रथोत्थधूलिर्दूरीकृता अतो मार्गो दृष्ट इत्यर्थः । 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इति लृङ् ॥ १७ ॥

व्यतीतेति । अथ सेनानिर्गमनानंतरं रथे स्यन्दने व्यतीताः अतिक्रान्ताः रथ्याः प्रतोल्यः येन एतादृशे सति 'रथ्या प्रतोली विशिखा' इत्यमरः । लसत् देदीप्यमानं अंशूनां किरणानां जालं ययोः, तेजस्विनोरित्यर्थः । एतादृशयोः विलासाः संति अस्याः सा विलासवती तस्याः एतादृश्याः तस्याः सीतायाः कपोलयोः गंडयोः पुरस्य नगरस्य गृह्याः बाह्याः 'पदास्वैरिबाह्यापक्ष्येषु च' इत्यनेन ग्रहधातोः क्यप् । या दीर्घिकाः वाप्यः तत्संबंधीनि यानि समीरणेन वायुना आनर्तितानि कम्पितानि पद्मानि कमलानि तेभ्यो जातं रजः पांसुः पपात प्राप ॥ १८ ॥

वराङ्गनेति । वरा श्रेष्ठा एतादृशी या अंगना सीता प्रस्तराणां पाषाणानां ये भेदाः खंडाः तेषां कोट्यः अग्राणि ताभिः । अल्पशब्दार्थे तत्र पाषाणखंडा विकीर्यंते तेषामग्रैरित्यर्थः । हतस्य ताडितस्य वरूथः रथगुप्तिः सा अस्यास्तीति वरूथी रथः तस्य 'रथगुप्तिर्वरूथो ना' इत्यमरः । चक्रे यत् चलनं स्खलनम्, अभूत् इति शेषः । स्खलनमिति पाठः सुकरः । ननु चलनं विधाय अत्र पिधाय इति पाठो लेखकप्रमादात् इति भाति । पथि मार्गे बलस्य सैन्यस्य सन्निधौऽपि सांनिध्येऽपि प्रियं तं रामं आलल्बे आशिश्राय । चक्रापातं विहाय पतनं माभूदिति भीत्या सैन्यसंनिधावपि लज्जां विहाय तं रामं आलल्बे इति तात्पर्यम् ॥ १९ ॥

रथेति । अथ पुरो बहिर्गमनानंतरं वनान्ते वनमध्ये वर्तते इति वनान्तवर्तिनी एतादृशी सीता । एकस्मिन् इति एकतः एकस्मिन् भागे इत्यर्थः । आद्यादित्वात्सप्तम्यन्तत्वात् तसिः 'इतराभ्योऽपि दृश्यन्ते' इति वा । रथस्य ध्वनयः स्वनाः तैः प्रापितः उत्पादितः सम्मदः प्रमोदो यस्य । 'प्रमोदामोदसंमदाः' इत्यमरः ।

विनिद्रपद्मा मृदुभिः समीरणैर्विसारयन्तः कलहंसिकागिरः ।
स्वदेशसीमासरितो विलंघिताः शुचं वधूचेतसि साधु सन्दधुः ॥ २१ ॥
विवृत्तदृष्टा विषयव्यतिक्रमाच्छनैर्निमज्जन्त इवावनीतले ।
स्वजन्मभूमौ गिरयो नृपात्मजाकपोलपातैरजस्रमश्रुभिः ॥ २२ ॥
गजेन्द्रदन्ताहतवन्यशल्लकीकषायगन्धिः पथि तत्र योषिताम् ।
शनैर्विधुन्वन्नलकाग्रवल्लरीर्मुखानि पस्पर्श वनान्तमारुतः ॥ २३ ॥
अथ प्रतानः प्रततान तामसो नृपस्य भीमं भयमादिशन्दिशः ।
क्षिपन् क्षपाया विगमेऽपि संहतिं प्रमह्य वैरोचनरोचिषां पथि ॥२४॥

---

समुत्पुच्छयते समूर्ध्वं पुच्छं करोति इति समुत्पुच्छयमान ‘ पुच्छभांडचीवराण्णिङ् ’ इति णिङन्तात् कर्तरि शानच् । उद्गत मुखं यस्य उदग्रो उद्यो कर्णौ यस्य एतादृशा परिधावतीति परिधावत् गवां धेनूनां कुलं समूहं ददर्श । स्वभावोक्त्यलंकारः । तदुक्तं—‘ स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम् ’ इति ॥ २० ॥

विनिद्रपद्मेति । विनिद्राणि प्रफुल्लानि पद्मानि यासु एतादृश्यः मृदुभिः कोमलैः [illegible] —न्यः [illegible] ताः [illegible] यः वध्वाः सीतायाः चेतः अंतःकरणं तस्मिन् साधु यथा स्यात्तथा शुचं शोकं संदधुः उत्पादयामासुः । संपूर्वात् धाधातोर्लिट् ॥ २१ ॥

विवृत्तदृष्टेति । विवृत्तेन विवर्तनेन, पराङ्मुखीभवनेनेत्यर्थः । विवृत्त इत्यत्र भावे क्तः । दृष्टाः विलोकिताः विषयस्य देशस्य व्यतिक्रमात् उल्लंघनात् शनैः अवनीतले पृथ्वीतले निमज्जंत इव अंतर्गच्छंत इव दृश्यंत इति शेषः । एतादृशाः स्वस्याः सीतायाः जन्मभूमौ ये गिरयः पर्वताः ते नृपस्य जनकस्य आत्मजा कन्या तस्याः कपोल गल अजस्रं सतत अश्रुभिः नेत्रोदकैः आतेनुः विस्तारयामासुः । नववधूनां स्वजन्मभूमिस्थवस्तूनां अदर्शने दुःखेन अश्रुपातो भवति तद्वत् सीतापि रुरोदेत्यर्थः ॥ उत्प्रेक्षालंकारः ॥ २२ ॥

गजेंद्रेति । तत्र अरण्ये पथि मार्गे गजेंद्राणां हस्तिनां दन्तैः रदैः आहताः वन्याः वनप्रभवाः ‘ तत्र भवः ’ इत्यधिकारे ‘ दिगादिभ्यो यत् ’ इति यत् । याः शल्लक्यः ओषधिविशेषाः तासां कषायः सुरभिः । ‘ कषायो रसभेदे च निर्यासे च विलेपने ॥ अंगरागे च न स्त्री स्यात् सुरभौ लोहिते त्रिषु ’ इति मेदिनी । गन्धो यस्य ‘ अल्पाख्यायां ’ इति समासांत इदादेशः । अलकानां केशानां अग्राण्येव वल्लरीः शनैः मंदं विधुन्वन् कंपयन् वनांतमारुतः अरण्यमध्यवर्ती वायुः योषितां मुखानि पस्पर्श । मदशीतसुगंधिवायुः तदा ववावित्यर्थः ॥ २३ ॥

अथेति । अथ मदवातप्रसरणानंतरं नृपस्य दशरथस्य भीमं घोरं ‘ घोरं भीमं भयानकं ’ इत्यमरः । भयं भीतिं आदिशति सूचयति इति आदिशन्,

**अरिष्टसन्तापविरूपदर्शनास्तमोभिभूताः प्रतिकूलमारुताः ।**
**अविप्रसन्नानि मुखानि भेजिरे दिशो विनाशोपनता इव क्षणम् ॥२५॥**
**अथ प्रकाशीभवदग्रतो दिशं क्षणादुदीचीमवभास्य दीप्तिभिः ।**
**बलेन तेजः पुरुषाकृतिश्रिया विभक्तमुत्पातमनु व्यदृश्यत ॥ २६ ॥**
**ततो दधानः श्रवणावसङ्गिनीं विशुष्कपङ्केरुहबीजमालिकाम् ।**
**विनिद्ररक्तोत्पलशङ्कया ततां विलोचनोपान्त इवालिसन्ततिम् २७**

---

सूचयन्नित्यर्थः । पथि मार्गे विरोचनस्य सूर्यस्य सम्बन्धीनि वैरोचनानि । 'तस्येदमित्यण्' एतादृशानि यानि रोचींषि तेजांसि । 'रोचिः शोचिरुभे क्लीबे' इत्यमरः । तेषां संहतिं समुदाय प्रसह्य हठात् क्षिपन् तिरस्कुर्वन् क्षपायाः रात्र्याः विगमेऽपि नाशेऽपि, अभावेऽपीति यावत् । तमसः अंधकारस्य अथ तामसः एतादृशः यः प्रतानः विस्तारः । तनु विस्तारे भावे घञ् । दिशः काष्ठाः ततान विस्तारयामास व्यापेत्यर्थः । दिवैव अधतमसं प्रादुर्बभूवेत्यर्थः । अनुप्रासालंकारः ॥ २४ ॥

अरिष्टेति । अरिष्टः अशुभः संतापः म्लानता येषु एतादृशाः विरूपदर्शनाः भयकरा इत्यर्थः । पक्षे अरिष्टः संतापः दुःखं येषां अतएव विरूपं दर्शनं अवलोकनं येषाम् । तमसा अंधकारेण अभिभूताः पराभूताः व्याप्ताः, इति यावत् । पक्षे तमसा अज्ञानेन अभिभूताः व्याप्ताः, कर्तव्याकर्तव्यशून्या इत्यर्थः । प्रतिकूलमारुताः विरुद्धवायवः झञ्झावाता इत्यर्थः । पक्षे प्रतिकूलता प्राप्ताः । देवाः क्षणं क्षणमात्रं विनाशाय प्रलयाय उपनताः प्राप्ताः । पक्षे विनाशं क्षयं उपनताः प्राप्ता इव दिशः काष्ठायाः । जात्येकवचनं दिशामित्यर्थः । अविप्रसन्नानि उद्विग्नतोत्पादकानि मुखानि भेजिरे सिषेविरे । तदानीं झञ्झावाताः अंधकारविशिष्टाः प्रववुः देवाश्च निलिल्युः ॥ २५ ॥

अथेति । अथ उत्पातदर्शनानन्तरं उत्पातमनु सम प्रादुर्भावादुत्पातानन्तरं 'अनुर्लक्षणे' इत्यनेन कर्मप्रवचनीयसंज्ञायां 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीया । अग्रतः अग्रभागे । आद्यादित्वात्सार्वविभक्तिकस्तसिः । क्षणात् क्षणमात्रेण उदीचीं दिशं दीप्तिभिः कान्तिभिः अवभास्य प्रकाश्य प्रकाशीभवत् प्रकटीभवत् । प्रकाशशब्दात् अभूततद्भावे च्विः । पुरुषस्य आकृतिः आकारः तद्रूपा श्रीः शोभा तया विभक्तं पृथक्त्वेन दर्शितं पुरुषस्वरूपमित्यर्थः । तेजः कर्म बलेन सैन्येन कर्त्रा व्यदृश्यत विलोकितम् । विपूर्वात् दृशधातोः कर्मणि लङ् ॥ २६ ॥

अथ चतुर्भिरेकं पुरुषं विशिनष्टि–तत इति । ततः पुरुषाकृतिदर्शनानन्तरं विनिद्रं विकसितं रक्तोत्पलं कोकनदं तस्य शङ्का आशङ्का तया विलोचनस्य नेत्रस्य उपान्ते प्रान्तभागे ततां व्याप्तां अलीनां भ्रमराणां संततिमिव पङ्क्तिमिव श्रवणयोः श्रोत्रयोः अवसज्जः सम्बन्धः सोऽस्त्यस्यामिति ' अत

विशालवामांसतटावलंबिनीं समुद्वहन् द्वीपितनुं तनूदरः ।
परिज्वलंस्तीव्रतपोहुताशनस्फुलिङ्गपातैरिव बिन्दुचित्रिताम् २८
भुजेऽतिभीमे सशरं शरासनं निधाय वामे निधनावहं द्विषाम् ।
करेऽपरस्मिन् परदुर्गपारगं परं स बिभ्रत्परशुं परासुहा ॥ २९ ॥
तपोभिधानस्य सितेतराध्वनः शिखा इवादित्यमयूखपिङ्गलाः ।
जटा विधुन्वन् वलिताः समन्ततः समीरणैरात्मरयेण सम्भृतैः ३०

---

इनिठनौ,' इति इनिः । तद्वतान् ' ऋन्नेभ्यो ङीप् ' इति ङीप् । विशुष्काणि यानि पङ्केरुहाणां कमलानां बीजानि तेषां मालिकां मालां दधानः धारकः । आरक्तनेत्रस्य दीर्घत्वात् कर्णान्तिकभासत्वेन कोकनदमिति मत्वा तथागतां भ्रमरपङ्क्तिमिव कर्णे शुष्ककमलबीजमालां दधानमित्यर्थः । पञ्चमश्लोकस्थभृगूणां प्रभुः इत्यस्येमानि विशेषणानि स रामेण जगदे इति तत्रत्यक्रियया संबधः । अतएवेदं कुलकम् । तदुक्तम्–' द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकम् ॥ कलापकं चतुर्भिः स्यात्तदूर्ध्वं कुलकं स्मृतम् ' इति ॥ २७ ॥

विशालेति । तनु कृशं उदरं यस्य एतादृशः सः पुरुषः परितः ज्वलन् दीप्यमानः तीव्रं यत्तपः स एव हुताशनः अग्निः तस्य स्फुलिंगाः कणाः ' त्रिषु स्फुलिंगोऽग्निकणः ' इत्यमरः । तेषां पातैरिव पतनैरिव बिन्दुभिः चित्रितां सञ्जातचित्राम् । चित्रशब्दात्तारकादित्वादितच्प्रत्ययः । विशालं विस्तृतं यद्वामांसस्य तटं अवलम्बते आश्रयते एतादृशीं द्वीपिनः व्याघ्रस्य ' शार्दूलद्वीपिनौ व्याघ्रे ' इत्यमरः । तनुं देहं समुद्वहतीति समुद्वहन् ॥ २८ ॥

भुज इति । द्विषां शत्रूणां ' द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः ' इत्यमरः । निधनस्य मरणस्य आवहं प्रापकम् । आङ्पूर्वाद्वहतेः पचाद्यच् । शरेण बाणेन सहितं सशरं अस्यन्ते क्षिप्यन्ते अनेनेति असनम् । असु क्षेपणे करणे ल्युट् । शराणां बाणानां असनं शरासनं, धनुरित्यर्थः । अतिभीमे अतिभयङ्करे वामे भुजे सव्ये भुजे निधाय अपरस्मिन् अन्यस्मिन् दक्षिणे करे हस्ते परं श्रेष्ठं परे शत्रव एव वा दुर्गं दुर्गमस्थानं तस्य पारगं अंतगं अथवा परेषां शत्रूणां दुर्गं तस्य पारगं एतादृशं परशुं बिभर्ति इति बिभ्रत् । बिभर्तेः शतरि रूपम् । असवः परेषां शत्रूणां असून् प्राणान् हन्तीति परासुहा एतादृशः सः पुरुषः ॥ २९ ॥

तप इति । तप एव अभिधानं नाम यस्य सितात् इतरः सितेतरः कृष्णः, सुप्सुपेति समासः, सः अध्वा मार्गो यस्य तस्य अग्नेः ' वह्निः शुष्मा कृष्णवर्त्मा' इत्यमरः । तपोरूपाग्नेरित्यर्थः । शिखा इव ज्वाला इव आदित्यस्य सूर्यस्य ये मयूखाः किरणाः तद्वत् पिंगला पिशंगा आत्मनः स्वदेहस्य रयः वेगः तेन संभृतैः उत्पन्नैः समीरणैः वायुभिः समन्ततः सर्वतः 'समन्ततस्तु परितः सर्वतः' इत्यमरः । वलिताः वलीभूताः जटाः सटाः विधुन्वन् विपूर्वाद्धुनोतेः शतृप्रत्ययः । उत्प्रेक्षालंकारः ॥ ३० ॥

प्रभुर्भृगूणां जगदे जगत्सृजः परोऽवतारो ज्वलनं वितन्वता ।
हसेन धुन्वन्नथ तद्बलं बली प्ररुद्ध्य रामेण रुषावृता गिरः ॥ ३१ ॥
न राम रामं युधि जेतुमुद्यमो विधीयतामन्यमिव क्षितिक्षितम् ।
सरित्तटीपाटनपाटवस्पृशो न गोपतिं प्राप्य विशीर्यते नगः ॥ ३२ ॥
रघोरपत्ये जगतीपतिद्विषो वृथा तव स्यादिह विक्रमक्रमः ।
अलं विसारिग्रसनस्य पाटवो न दन्दशूकप्रभवे विहङ्गमः ॥ ३३ ॥
तव प्रयोगे धनुषोऽनुशासितुः शरासने भूधरधन्वनः परम् ।
इतः प्रवृत्तापि न नूनमागता विपत्त्वदीयश्रवणस्य गोचरम् ॥ ३४ ॥

---

प्रभुरिति । अथ जगत् सृजतीति जगत्सृट् तस्य जगत्सृजः विष्णोः परः श्रेष्ठः अवतारः ज्वलनं अग्निं वितनोतीति वितन्वन् तेन हसेन हास्येन । 'अथो हसः ॥ हासो हास्य च' इत्यमरः ॥ हासस्य कोपजन्यत्वात् तीक्ष्णत्वम-नेन द्योत्यते । तत् पूर्वोक्तं बलं सैन्यं धुन्वन् कम्पयन् अतएव बली भृगूणां प्रभुः परशुराम इत्यर्थः । रामेण दाशरथिना प्ररुध्य रुषा रोषेण वृताः युक्ता इत्यर्थः । गिरः वाणीः जगदे ऊचे । गदधातोः ब्रूञर्थत्वात् द्विकर्मकत्वेन गौणे कर्मणि लिट् । तदुक्तम्–'गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्' इति ॥ ३१ ॥

रामेण भृगूणां प्रभुः जगदे इत्युक्तं किं तत् इत्यपेक्षायामाह नेति । हे राम अन्यं इतरं क्षितिक्षितमिव राजानमिव 'नृपभूपमहीक्षितः' इत्यमरः । रामं मामित्यर्थः । युधि युद्धे जेतु उद्यमः न विधीयतां न क्रियताम् । तदेव द्रढयति-सरिदित्यादिना । सरितः नद्याः तटी तटं तस्य पाटने विदारणे तत्र यत् पाटवं कौशलम् । 'ऋगताश्च लघुपूर्वात्' इति भावे अण् । तत् स्पृशति इति स्पृक् एतादृशम् 'स्पृशोऽनुदके क्विन्' इति क्विन्प्रत्ययः । गवां वृषभाणां पतिः गोपतिः वृषभः तं प्राप्य । नगः पर्वतः 'नगोऽप्राणिष्वन्यतरस्याम्' इति निपातः । न विशीर्यते । विपूर्वात् 'शॄ हिंसायाम्' इत्यस्मात् कर्मकर्तरि लट् ॥ ३२ ॥

रघोरिति । जगत्याः पृथ्व्याः पतयः स्वामिनः राजान इत्यर्थः । तान् द्वेष्टीति जगतीपतिद्विट् 'सत्सूद्विष—' इत्यादिना क्विप् । एतादृशस्य तव परशुरामस्य रघोः अपत्ये इह मयि विक्रमस्य पराक्रमस्य क्रमः वृथा मुधा स्यादित्यर्थः । 'व्यर्थके तु वृथा मुधा' इत्यमरः । विसारी मत्स्यः 'विसारिणो मत्स्ये' इति निपातनात् साधुः । तस्य ग्रसनं भक्षणं तत्र तिष्ठतीति विसारीग्रसनस्थं 'सुपीति' योगविभागात् कप्रत्ययः । ग्रसनकारीति यावत् । एतादृशं पाटवं कौशलं यस्य एतादृशः विहायसा आकाशेन गच्छतीति विहंगमः 'विहायसो विह च' इति गमेः खच् । विहायसो विहादेशश्च । पक्षी । दन्दशूकानां सर्पाणां प्रभुः तस्मै महासर्पायेत्यर्थः । अलं न 'नमःस्वस्ति' इत्यादियोगे चतुर्थी ॥ ३३ ॥

त्वदीयं सामर्थ्यं मयि न प्रभवेत् इति यदुक्तं तत् स्वोपदर्शनेन द्रढयति-तवेति । धनुषः प्रयोगे धनुर्विद्यायामित्यर्थः । तव परशुरामस्य अनुशासि-

निशम्य तस्यैतदितीरितं वचो जगाद शिष्यः स पुनः पिनाकिनः ।
परस्य वृद्धिं यशसो वितन्वतीं वृथा विधित्सन् धनुषो भिदामिदम् ॥ ३५ ॥
नवेश्वर स्तब्धतरं धनुर्द्वयं विधाय कन्येतरबाणपातनम् ।
विशामधीशे किल विश्वकर्मणा पुरन्दराख्याय पुरा व्यतीर्यत ॥ ३६ ॥
विसृज्य पूर्वं दनुजारये धनुस्तयोरथादायि रथाङ्गधारिणे ।
धनुस्तथैकं त्रिपुरं विघस्ने त्रिलोचनाय त्रिदशाधिपेन तत् ॥ ३७ ॥

---

शिक्षयति इति अनुशासिता तस्य गुरोरित्यर्थः । एतादृशस्य भूधरः पर्वतः धनुर्यस्य स भूधरधन्वा शंकरः ' धनुषश्च ' ' वा संज्ञायां ' इत्यनङ् । तस्य शरासने धनुषि परं प्रकृष्टं यथा स्यात्तथा । क्रियाविशेषणमिदम् । इतः मत्तः मत्सकाशात् उत्पन्नापि विपत् भगवता विपत्तिः त्वदीय यत् श्रवणं तस्य गोचरं विषयं पुनः निश्चयेन गमिता न आसा ? ॥ ३४ ॥

निशम्येति । तस्य रामचन्द्रस्य एतत् इति पूर्वोक्तप्रकारेण ईरितं उक्तं वचः भाषणं निशम्य श्रुत्वा । परस्य शत्रोः रामस्य यशसः कीर्तेः । परस्य यशसः इति वाऽन्वयः । वृद्धिं वितन्वतीं विस्तारयित्रीं धनुषः भिदां भेदं वृथा व्यर्थं विदधातुमिच्छतीति विधित्सन् एतादृशः पिनाकः अजगवः अस्यास्तीति पिनाकी तस्य ' अत इनिठनौ ' इति इनिप्रत्ययः । शंकरस्य शिष्यः ' एतिस्तुशास्वृदृजुषः क्यप् ' क्यप् । सः पूर्वोक्तः परशुरामः इदं वक्ष्यमाणं वचः पुनः जगाद । अनुप्रासालङ्कारः ॥ ३५ ॥

नवेश्वरेति । नवः नूतनः स ईश्वरः अधिपतिः तत्संबोधनं हे नवेश्वर राम । पुरा पूर्वस्मिन् काले विश्वकर्मणा एतन्नाम्नैव देवत्वष्ट्रा । कन्य निष्फल तस्मात् इतरत् अन्यत् । सुफलमित्यर्थः । एतादृशं बाणपातनं बाणोत्सर्गो यस्य एतादृशं अतिशयेन स्तब्धं उपष्टब्ध इति स्तब्धतरं ' ष्टभि प्रतिबन्धे ' इत्यस्मात् क्तः । दृढमिति फलितार्थः । एतादृशं धनुषोः द्वितयं द्विधाय कृत्वा पुरः शत्रुपुरः दारयतीति पुरंदरः इंद्रः पुरंदर इति आख्या यस्य स पुरंदराख्यः तस्मै ' पूःसर्वयोर्दारिसहोः ' इति खच् ' खचि ह्रस्वः ' इति ह्रस्वः । ' वाचंयमपुरंदरौ च ' इत्यमागमः । विशां मनुष्याणां ' द्वौ विशौ वैश्यमनुजौ ' इत्यमरः । मनुष्योपलक्षितत्रिभुवनस्थलोकानामित्यर्थः । अधीशे अधिपतये । अधिपूर्वात् ईशधातोः क्विबन्तस्य चतुर्थ्यंत रूपम् । व्यतीर्यत किल अदायि इति प्रसिद्धिः । विपूर्वात् ' तॄ प्लवनतरणयोः ' इत्यस्मात् कर्मणि लङ् ॥ ३६ ॥

' विसृज्येति । अथ विश्वकर्मणा इंद्राय धनुर्दानानन्तरं त्रिदशानां देवानां अधिपः इंद्रः तेन तयोः पूर्वोक्तधनुषोर्मध्ये पूर्वं आदावित्यर्थः । क्रियाविशेषणमेतत् । एकं धनुः शरासनं दनुजानां दैत्यानां अरिः शत्रुः एतादृशाय रथाङ्गं चक्रं अभीक्ष्णं धरतीति रथाङ्गधारी ' बहुलमाभीक्ष्ण्ये ' इति णिनिः । तस्मै विष्णवे

विवित्सया तद्गतजन्यतेजसो व्यधत्त यत्नेन तथा मरुत्पतिः ।
यथाऽऽहवो हव्यवहोग्रतेजसोरजय्यशक्त्योरजयोरजायत ॥ ३८॥
चकार चक्रादि विहाय देवयोर्युगं महेष्वासयुगेन संयुगम् ।
दिशो दशापि प्रतिरुध्य पत्रिभिः समाः सहस्राणि समेतसाहसम् ॥३९
अथो विकृष्टं मृदुभूतमीश्वरः ससर्ज यच्चापमभेदि तत्त्वया ।
अगाद्दर्वीकाय वितीर्णमक्षतं क्रमेण हस्तं मम वैष्णवं धनुः ॥ ४० ॥

---

विसृज्य दत्त्वा तथा त्रयाणां पुराणां समाहारः त्रिपुरं तत् दग्धुमिच्छतीति दिधक्षन् तस्मै । त्रिलोचनाय त्रीणि लोचनानि नेत्राणि यस्य तस्मै शिवाय तत् पूर्वोक्त एक धनुः अदायि । 'डुदाञ् दाने' अस्मात् कर्मणि लुङ् चिण् ॥ ३७ ॥

ननु विश्वकर्मणा स्वय निर्माय दत्त धनुर्द्वयं इन्द्रः किमर्थं विष्णुशिवाभ्यां प्रददौ अत आह-विवित्सयेति । मरुतां देवानां पतिः मरुत्पतिः इन्द्रः । वहतीति वहः हव्यस्य हविर्द्रव्यस्य वहः हव्यवहः अग्निः तद्वत् उग्र तेजो ययो. । अतएव येतु शक्या जय्या 'क्षय्यजय्यौ शक्यार्थे' इति निपातनात्साधुः । न जय्या अजय्या शक्तिर्ययोस्तौ अजय्यशक्तो तयो. अजय्योः विष्णुशिवयोः आहवः युद्ध यथा अजायत अभवत् 'जनी प्रादुर्भावे' लङ् । तथा तौ विष्णु शिवौ प्रति गत प्राप्त यत् जन्यस्य युद्धस्य तेज. सामर्थ्यं तस्य विवित्सया विचारणेच्छया । विद् विचारणे सन् विद् ज्ञाने इत्यस्माद्वा सन् । 'आगमशास्त्रमनित्यम्' इति इडभावः । तद्वा जिज्ञासयेत्यर्थ. । यत्नेन प्रयत्नेन व्यधत्त अकृत । विपूर्वाद्दधातेर्लङ् । तयोर्युद्धतेजोज्ञानार्थं ताभ्यां धनुर्द्वयं दत्तमित्यर्थः । अनुप्रासालंकारः ॥ ३८ ॥

चकारेति । देवयोः विष्णुशिवयोः युगं युग्मम् । चक्रं आदि यस्य तत् चक्रादि तैजसायुधवृन्दमित्यर्थः । विहाय त्यक्त्वा महत् यत् इष्वासयुगं धनुर्युगं तेन पत्रिभिः बाणैः दशापि दशसंख्याकाः अपि दिशः काष्ठाः प्रतिरुध्य निरुध्य सहस्राणि सहस्रसंख्याकानि समाः वर्षाणि । अत्यन्तसंयोगे द्वितीया । समेत प्राप्तं साहस यस्मिन् एतादृशं संयुग युद्ध चकार । अनुप्रासालंकारः ॥ ३९ ॥

अथो इति । अथो विष्णुशिवयुद्धानंतरं ईश्वरः शिवः विकृष्ट आकृष्ट मृदुभूत युद्धकर्मणा शैथिल्यं प्राप्तं एतादृशं यच्चापं यद्धनुः ससर्ज त्यक्तवान् तत् त्वया अभेदि द्विधाकृतम् । भिदिर् विदारणे कर्मणि लुङ् । ऋचीकाय एतन्नामकमहर्षये[1] कर्मोचितपत्रे वितीर्णं दत्तम् । विष्णुनेति शेषः । विष्णो इदं वैष्णवं धनुः क्रमेण परंपराक्रमेण मम हस्तं अगात् ॥ ४० ॥

---

१ स्वपितामहाय भृगुवंशजाय ।

गुणावुभावस्य तयोर्जगच्छ्रुतिं जहाति नैको दृढतेति विश्रुतः ।
असंशयं ज्योतिर्निरूढिमागतः परो ममैव श्रवणान्तगोचरः ॥ ४१ ॥
अपाङ्गभागावधि चापपूरणं सुदुष्करं तिष्ठतु विष्णुगोचरम् ।
गुणं यदि प्रापयसीह जिह्मतां बलोपपन्नेषु ततस्त्वमग्रणीः ॥ ४२ ॥
निधाय बाणं धनुषीह पूरिते वधः स्वहस्तेन तवैष सत्क्रिया ।
इतीरयित्वा तनयस्य भूपतेर्मुमोच हस्ते सशरं शरासनम् ॥ ४३ ॥
ततः स शून्याविव मुष्टिमानयन्नपाङ्गदेशं दशकण्ठसूदनः ।
बलाद् विज्ञातविकर्षणश्रमश्चकर्ष गुञ्जद्गुणबन्धनं धनुः ॥ ४४ ॥

---

गुणाविति । अस्य धनुषः दृढतेति ज्या इति च उभौ गुणौ स्त इत्यर्थः । तयोर्गुणयोर्मध्ये दृढस्य भावो दृढता दार्ढ्यं इति विश्रुतः प्रसिद्धः एकः गुणः जगति श्रुतिः प्रसिद्धिः तां न जहाति न त्यजति । ज्या इति मौर्वीति असंशयं निःसंदेहं यथा स्यात्तथा निरूढिं प्रसिद्धिं आगतः प्राप्तः परः गुणः ममैव श्रवणस्य कर्णस्य अन्तः समीपभागः तस्य गोचरः विषयः अस्तीत्यर्थः । इदं दृढमिति जगत्प्रसिद्धम् । एतस्य ज्याकर्षणं मयैव कर्तुं शक्यं नान्येन इति भावः ॥ श्लेषालङ्कारः ॥ ४१ ॥

अपांगेति । विष्णुः गोचरो विषयो यस्य तद्विष्णुगोचरं विष्णुनैव कर्तुं योग्यमित्यर्थः । अतएव दुःखेन कर्तुं शक्यं दुष्करं सुतरां दुष्करं सुदुष्करम् । 'ईषद्दुःसुषु' इत्यादिना खल् प्रादिसमासश्च । अपांगः नेत्रान्तः 'अपांगौ नेत्रयोरन्तौ' इत्यमरः । तस्य भागः स अवधिर्यस्य एतादृशं यत् चापस्य धनुषः पूरणं आकर्षणं तत् तिष्ठतु अस्तु इत्यर्थः । विष्णवेकसाध्यं तत् तव दुष्करत्वात् अस्तु परंतु इह धनुषि गुणं ज्यां यदि जिह्मस्य वक्रस्य भावः जिह्मता तां प्रापयसि नयसि ततः तर्हि बलेन उपपन्नाः युक्ताः तेषु बलाढ्येष्वित्यर्थः । त्वं रामचन्द्रः अग्रणीः श्रेष्ठः असीति शेषः । 'सत्सूद्विष-' इत्यादिना क्विपि 'अग्रग्रामाभ्याम्' इति णत्वम् ॥ ४२ ॥

निधायेति । [redacted] पूरिते सज्ये धनुषि चापे बाणं शरं निधाय संयोज्येत्यर्थः । स्वहस्तेन निजहस्तेन वधः ममेति शेषः । एषः वधः तव सती चासौ क्रिया च सत्क्रिया सत्कार इत्यर्थः । इति पूर्वप्रकारेण ईरयित्वा उक्त्वा भूपतेः दशरथस्य तनयस्य रामचन्द्रस्य हस्ते करे शरेण बाणेन सहितं सशरं शरासनं धनुः मुमोच ददौ । मुच्लृ मोक्षणे लिट् ॥ ४३ ॥

तत इति । ततः परशुरामेण धनुर्दानानंतरं दश कण्ठा यस्य स दशकण्ठो रावणः तस्य सूदनः नाशकः । नन्द्यादित्वात् ल्युः । स रामचन्द्रः शून्याविव मुष्टिं अपांगस्य नेत्रप्रान्तस्य देशं आनयन् प्रापयन् अविज्ञातः न ज्ञातः विकर्षणस्य आकर्षणस्य श्रमो यस्य एतादृशः सन् गुञ्जत् शब्दायमानम् । गुजि अव्यक्ते शब्दे शतृप्रत्ययः । गुणबंधनं रज्जुबंधनं यस्य एतादृशं धनुः चकर्ष ॥ ४४ ॥

स तेन मुक्तः किल सायको दिवः पदं तपस्यद्वृषभस्य वांछतः ।
द्वितीयवर्णस्य निहन्तुरात्मनो विधाय नीशारमथ व्यतिष्ठत ४५
रिपोरजय्यस्य जयेन मानवैः सभाज्यमानो बहुमानमन्त्रणैः ।
मनोज्ञवासे पथि मैथिलीसखः सुखेन नीत्वा कतिचिद्दिनानि सः ४६
व्यपावृतद्वारमुखेन सन्ततं बलेन भूम्ना विशता कृतध्वनिम् ।
पुरीमुदन्वन्तमुदग्रनिस्वनं तनुं पिबन्तीमिव कुम्भजन्मनः ॥ ४७ ॥
नरेन्द्ररथ्योभयभागचारितप्रसारिकालागुरुधूपवासिताम् ।
ततामनन्तैरुपरत्नतोरणं सपङ्कजाष्टापदकुम्भमण्डलैः ॥ ४८ ॥

---

स इति । अथ धनुःकर्षणानंतरं तेन रामेण मुक्तः उत्सृष्टः सः सायकः बाणः दिवः पदं स्वर्गस्य स्थानं वांछतः इच्छतः द्वितीयवर्णस्य क्षत्रियवर्णस्य निहंतुः नाशयतुः तपस्यतो तपश्चरतः ' कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ' इति क्यङ् । मध्ये वृषभस्य श्रेष्ठस्य आत्मनः नीशारं प्रावरणम् । ' नीशारः स्यात्प्रावरणे ' इत्यमरः । *विधाय कृत्वा व्यतिष्ठत । विपूर्वात्तिष्ठतेर्लङ् । ' समवप्रविभ्यः स्थः '* इत्यात्मनेपदम् ॥ ४५ ॥

रिपोरिति । जेतुं शक्यो जय्यः ' क्षय्यजय्यौ शक्यार्थे ' इति निपातः । न जय्यः अजय्यः तस्य रिपोः परशुरामस्य जयेन हेतुना मानवैः मनुष्यैः बहुमानेन सत्कारेण यानि मंत्रणानि आमंत्रणानि तैः सभाज्यते सेव्यते इति सभाज्यमानः । सभाज प्रीतिदर्शनयोः, प्रीतिसेवनयोरित्येके चुरादिः । मैथिल्याः सखा मैथिलीसखः । ' राजाहःसखिभ्यष्टच् ' इति टच् । स रामचंद्रः मनोज्ञः मंजुलः अभीष्ट इत्यर्थः । वासः वसतिर्यस्मिन् एतादृशे पथि मार्गे कतिचित् दिनानि नीत्वा सुखेन पुरीं विवेश इति क्रियायामन्वयः ॥ ४६ ॥

— .पुरीमेव वर्णयति-व्यपावृतेति पञ्चभिः । व्यपावृतं उद्घाटितं यद्द्वारं तदेव मुखं तेन संततं निरंतरं विशता प्रविशता भूम्ना प्रभूतेनेत्यर्थः । ' बहोर्लोपो भूच बहोः ' इत्यनेन भ्वादेशः इमनिः इकारलोपश्च । बलेन सैन्येन हेतुना कृतः ध्वनिः शब्दो यया एतादृशीम् । उदग्रः महान् निस्वनः ध्वनिर्यस्य एतादृशं उदकानि संति यस्मिन् स उदन्वान् तम् । ' उदन्वानुदधौ च ' इति निपातनात्साधुः । पिबंती कुंभात् कलशात् जन्म यस्य स कुंभजन्मा अगस्त्यः तस्य तनुमिव देहमिव पुरीं अयोध्यानगरीम् । विवेशेति पंचमेनान्वयः ॥ ४७ ॥

नरेंद्रेति । नरेंद्रस्य राज्ञः या रथ्या प्रतोली तस्याः उभयभागौ प्रांतभागावित्यर्थः । तत्र चारिताः संचारिताः ये प्रसारिकालागुरुधूपाः प्रसरणशीलकालागुरुगंधाः तैः वासितां सुगंधितां रत्नतोरणस्य बहिर्द्वारस्य समीपं उपरत्नतोरणं ' अव्ययं विभक्ति ' त्यादिना सामीप्येऽव्ययीभावः । रत्नबहिर्द्वारसमीपमित्यर्थः । अनंतैः अपरिमितैः सपंकजानि सकमलानि यानि अष्टापदस्य सुवर्णस्य कुंभानां कलशानां मंडलानि चक्रवालानि समूहा इति यावत् । तैः ततां विस्तृतां व्याप्तामित्यर्थः ॥ ४८ ॥

परिक्वणत्काञ्चनकिङ्किणीगुणैः सुगन्धिना गन्धवहेन ताडितैः ।
भ्रमत्पताकानिकरैरुदर्चिषो वितन्वतीमुष्णघृणेः करच्छिदाम् ४९
मधुव्रतव्रातविरावकिङ्किणीरुतेन रम्यं मणितोरणस्रजाम् ।
चयं दधानामनिलस्य रंहसा धुतं पताकानुकृतानि बिभ्रतः ॥ ५० ॥
विवेश तामञ्जलिबन्धसम्पदा मुहुर्मुखेन्दोरुदयेन सर्वतः ।
नरेन्द्रसूनुर्मुकुलानि कल्पयन् जनस्य हस्तारुणपङ्कजानि सः ॥ ५१ ॥
गुरूनपृष्ट्वैव कुमारमीक्षितुं जवेन वातायनमीयुरङ्गनाः ।
न ता न सत्यो न च मूढवृत्तयस्तथाहि पंक्तस्य रघोर्विनीतता ५२

---

परिक्वणदिति । परिक्वणतः सर्वतो ध्वनतः काञ्चनस्य सुवर्णस्य किंकिणीनां क्षुद्रघटानां गुणाः संतवो येषु तैः ' किंकिणी क्षुद्रघंटिका ' इत्यमरः । सुष्ठु गंधो यस्य स सुगंधिः ' गंधस्येदुत्पूतिसुसुरभिभ्यः ' इत्यादिना गंधस्येकारादेशः समासांतः । तेन । वहतीति वहः । पचाद्यच् । गंधस्य वहः मापकः वायुरित्यर्थः । तेन ताडितैः । आहतैः भ्रमत्यः इतस्ततश्चलंत्यः पताकाः केतनानि ' पताका वैजयंती स्यात् केतनं ध्वजमस्त्रियां ' इत्यमरः । तेषां निकरैः समूहैः ' कर्तृकरणयोस्तृतीया ' इत्यनेन करणे तृतीया । उद्गतानि अर्चींषि यस्य ॥ उदर्चिः तस्य । उष्णाः तीक्ष्णाः घृणयः किरणाः यस्य स उष्णघृणिः सूर्यः तस्य कराणां किरणानां छिदा छेदनम् । भिदादित्वात् भावे अङ्प्रत्ययः । वितन्वतीं कुर्वतीम् । निबिडपताकास्खलनैः सूर्यकिरणानां तापो माभूदित्यर्थः ॥ ४९

मधुव्रतेति । मधुव्रताः भ्रमराः ' मधुव्रतो मधुकरो मधुलिण्मधुपालिनः । इत्यमरः॥ तेषां व्रातं समूहः तस्य यो विरावः गुंजितं तद्वत् यत् किंकिणीरुतं क्षुद्रघंटिकाशब्दः तेन रम्यं मनोहरं पताकानामनुकृतानि अनुकरणानि बिभ्रतः धारयतः । बिभर्तेर्लटः शत्रादेशः नाभ्यस्ताच्छतुरिति नुम्निषेधः । एतादृशस्य अनिलस्य वायोः रंहसा वेगेन धुतं कंपितं मणितोरणानां मण्यादिरचितबहिर्द्वाराणां संबंधिन्यः याः स्रजः मालाः तासां चयं समूहं धत्ते सा दधाना ताम् । दधातेर्लटः शानजादेशः ॥ ५० ॥

विवेशेति । सः पूर्वोक्तः नरेंद्रस्य दशरथस्य सूनुः पुत्रः रामचंद्रः मुहुः पुनः पुनः सर्वतः सर्वस्मिन्देशे अंजलीनां करपुटानां यो बंधः करणमित्यर्थः । सैव संपत् तया जनस्य लोकस्य हस्ता एव अरुणपंकजानि आरक्तकमलानि तानि मुखमेव इंदुः चंद्रः तस्य स्वस्येति शेषः । उदयेन हेतुना मुकुलानि कुड्मलानि ' कुड्मलो मुकुलो स्त्रियां ' इत्यमरः । कल्पयन् तर्कयन् सन् तां अयोध्यापुरीं विवेश ॥ ५१ ॥

इदानीं अत्यौत्सुक्येन तन्मुखावलोकनार्थं स्वस्वव्यापारं परित्यज्य नगरवासिभिः स्त्रीभिरागतमित्याह—गुरूनिति । अंगनाः स्त्रियः कुमारं रामचंद्रं ईक्षितुं अवलोकितुं गुरून् श्वश्र्वादिगुरुजनान् अपृष्ट्वैव जवेन वेगेन वातायनं गवाक्षं "वातायनं गवाक्षोऽस्त्री" इत्यमरः । ईयुः प्रापुः । अपृष्ट्वागमनं उभयथा संभवति

रराज वातायनसन्ततिर्वृता विलोलनेत्रैर्वनितामुखाम्बुजैः ।
तता विनीलोत्पलपत्रसम्पदा सरोजिनी तिर्यगिव व्यवस्थिता ५३
दधौ द्युतिं जालगवाक्षसङ्गिनी नितम्बिनीनां चलदृष्टिसन्ततिः ।
ततेव पङ्केरुहनालजालके परिस्फुरन्ती शफरीपरम्परा ॥ ५४ ॥
पदं पुरंध्र्यामविशुष्कयावकं समर्पयन्त्यामविलम्बिविक्रमम् ।
बभूव सोपानविमर्दसम्भवः स्वराग एवांघ्रितलस्य यावकः ॥ ५५ ॥
कयाचिदालोकपथं मुखाकुलं समेत्य घर्मस्रुतपत्रलेखया ।
सखीकपोलाहितगण्डभागया कृतस्तदीयेऽपि मुखे विशेषकः ५६

---

असतीत्वेन मूढत्वाद्वा. तत् उभयमपि अत्र कारणं नेत्याह—नेति ताः स्त्रियः सत्यो नेति न, मूढा वृत्तिः यासां ता मूढवृत्तयः तादृश्योऽपि न च । किं तर्हि कारणं तत्राह—तथाहीति । रघोः एतन्नामकराज्ञः वंशस्य कुलस्य विनीतता विनीतस्य विनयान्वितस्य भावो विनीतता तथाहि तादृश्येव हि । रघुवंशस्य विनीतत्वं वर्तते अतः तदुद्भवस्य रामस्य विलोकनार्थं अपूर्वागमने सतीत्वं न हीयते इति तात्पर्यम् ॥ ५२ ॥

ररराजेति । विलोलानि चपलानि नेत्राणि येषु एतादृशानि यानि वनिता-मुखाम्बुजानि स्त्रीमुखकमलानि तैः वृता वेष्टिता वातायनानां गवाक्षाणां सततिः परंपरा विनीलानि यानि उत्पलपत्राणि कमलपत्राणि तेषां सम्पत् शोभा तया तता व्याप्ता तिर्यक् व्यवस्थिता विद्यमाना सरोजिनीव कमलिनीव ररराज शुशुभे ॥ उपमालंकारः ॥ ५३ ॥

दधाविति । जालस्य आनायस्य यो गवाक्षः तस्य यः सङ्गः संबन्धः सोऽस्याः अस्तीति जालगवाक्षसङ्गिनी एतादृशी । प्रशस्तः नितम्बः अस्ति यासां ताः नितम्बिन्यः ' भूमनिन्दाप्रशंसासु ' इत्यादिना प्रशंसायामिनिः । तासां स्त्रीणां चला चंचला या दृष्टिसन्ततिः दृष्टिपरंपरा पङ्केरुहाणां कमलानां नालाः तेषां जालके तता व्याप्ता अतएव परितः स्फुरन्ती शफरीणां मत्स्यीनां परंपरेव पंक्तीव द्युतिं कान्तिं दधौ दधार । डुधाञ् धारणपोषणयोः लिट् । उपमालंकारः ॥ ५४ ॥

पदमिति । पुरंध्र्यां स्त्रियां अविशुष्कः आर्द्रः यावकः अलक्तको यस्य अवि-लम्बी विक्रमः विक्षेपो यस्य एतादृशं पदं समर्पयन्त्यां स्थापयन्त्यां सत्यां सोपानस्य आरोहणस्य यो विमर्दः संघर्षणं तस्मात् संभवो यस्य एतादृशः स्वरागः स्वस्य अंघ्रितलस्य यो रागः रक्तिमा स एव अंघ्रितलस्य चरणाधोभागस्य याव एव यावकः अलक्तकः ' यावादिभ्यः कन् ' इति स्वार्थे कन्प्रत्ययः । बभूव । आर्द्रालक्तकपदस्य द्विरुक्तत्वरया पुनः पुनः निक्षेपेण अलक्तकापगमेऽपि संघ-र्षजन्यः सुकुमारपदस्य रक्तिमैव अलक्तको बभूव ॥ ५५ ॥

कयाचिदिति । मुखैः आकुलं व्याप्तं आलोकस्य अवलोकनस्य पंथाः मार्गः आलोकपथः ' ऋक्पूरब्धूः ' इत्यादिना अप्रत्ययः समासान्तः । तं गवा-

प्रसाधनव्यापृतयाऽपि रामया प्रदेशिनीपर्वविकृष्टकर्णया ।
उपायये वामकरस्थपत्रया रयेण वातायनजालमन्यया ॥ ५७ ॥
द्रुतप्रयाणश्लथकेशबन्धना सघर्मवारिस्रुति बिभ्रती मुखम् ।
श्रमातुरोरुद्वयमन्थराऽपरा ययौ सपत्न्या परिशङ्कनीयताम् ॥ ५८ ॥
नितान्तमेकीकृतगण्डभागयोर्भृशाल्पवातायनयातमन्ययोः ।
सुभासुरं कुण्डलमेकमेव तन्मुखद्वयं मण्डयति स्म रामयोः ॥ ५९ ॥
विधाय काचित् प्रथमं तु लज्जया प्रियोपभुक्ताधरमर्धलक्षितम् ।
प्रयाति दूरं नृपतौ दिदृक्षया चकार वातायनयातमाननम् ॥ ६० ॥

---

क्षमित्यर्थः । घर्मेण स्रुता प्रसृता इत्यर्थः । पत्रलेखा यस्याः एतादृश्या कयाचित् स्त्रिया समेत्य प्राप्य सख्याः यौ कपोलौ तत्र आहितः गण्डभागः गण्डभागो यया एतादृश्या सत्या तस्याः सख्याः इदं सदीर्घं तस्मिन् ' त्यदादीनि च ' इति वृद्धसंज्ञायां ' वृद्धाच्छः ' इति छप्रत्ययः । मुखेपि वक्रेपि विशेषकः तिलकः कृतः ॥ ५६ ॥

प्रसाधनेति । प्रसाधने अलङ्करणे ' सिद्धौ वेषे प्रसाधनम् ' इति मेदिनी । व्यापृतयाऽपि तत्परयाऽपीत्यर्थः । अतएव प्रदेशिन्याः पर्व तेन विकृष्टः आकृष्टः कर्णः श्रोत्रं यया वामः सव्यः यः करः तत्र तिष्ठतीति वामकरस्थम् ' सुपीति च ' । एतादृशं पत्रं यस्याः एतादृश्या । अन्यया अपरया रामया स्त्रिया रयेण वेगेन वातायनजालं गवाक्षजालं उपाययें । ' या प्रापणे ' कर्मणोऽविवक्षितत्वात् भावे लिट् ॥ तदुक्तम्—' धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ॥ प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ' इति ॥ ५७ ॥

द्रुतप्रयाणेति । द्रुतं शीघ्रं यत् प्रयाणं तेन श्लथं शिथिलं केशबन्धनं यस्याः एतादृशी अतएव घर्मवारिणः स्रुतिः प्रस्रवणं तेन सहितं सघर्मवारिस्रुति एतादृशं मुखं बिभ्रती धारयन्ती श्रमेण त्वरितगतिश्रमेण आतुरं ग्लानं यत् ऊरुद्वयं सक्थिद्वयं तेन मन्थरा, मन्दगतिरित्यर्थः । एतादृशी अपरा स्त्री सपत्न्या समानः एकः पतिर्यस्याः सा सपत्नी ' नित्यं सपत्न्यादिषु ' इति पत्युर्नादेशः ङीप् च । तस्याः परिशङ्कनीयतां आशङ्कनीयतां ययौ । श्लथकेशबन्धनस्य सघर्ममुखत्वस्य श्रमातुरोरुद्वयत्वस्य त्वरितगतिरतिभ्यां जन्यतया सपत्न्याः शङ्कास्पदमभूदित्यर्थः ॥ सन्देहालङ्कारः ॥ ५८ ॥

नितान्तमिति । नितान्तं अत्यन्तं एकीकृतः गण्डभागः गण्डभागो ययोस्ते एकीकृतगण्डभागे तयोः अन्ययोः अपरयोः रामयोः स्त्रियोः भृशं अत्यन्तं अल्पं यत् वातायनं गवाक्षं तत् यातं प्राप्तं सुतरां भासुरं ' भञ्जभासमिदो घुरच् ' इति घुरच्प्रत्ययः । एकमेव कुण्डलं तयोः मुखद्वयं तत् मण्डयति स्म भूषयति स्म । मडि भूषायां ' लट् स्मे ' इति भूते लट् ॥ ५९ ॥

विधायेति । काचित् स्त्री तु प्रथमं पूर्वं लज्जया त्रपया प्रियेण उपभुक्तः सदष्टः अधरः अधरोष्ठो यस्य एतादृशं आननं मुखं अर्धं च तत् लक्षितं

अतिष्ठदेका कुचयुग्मसम्पदा निरुद्ध्य वातायनमुन्नतस्तनी ।
सखीजनो यत्कृशमध्यमागतः पताकिनीमन्तरमाप वीक्षितुम् ॥ ६१ ॥
निधाय काचित्तनयं तनूदरी प्रसह्य वातायनदेहलीतले ।
अकारयत्पङ्कजकोशकोमलं महीभुजे बालकमञ्जलिं बलात् ॥ ६२ ॥
नृपः सुमित्रातनयो वधूरिति प्रियाजने निर्दिशति स्वयं करैः ।
तलप्रभापाटलभागभागिनो नखांशुजाला अपि चेरुरम्बरे ॥ ६३ ॥
अशक्नुवन् वर्धयितुं नृपात्मजं वधूजनोऽधृष्टतया जयेन तम् ।
पदं विधत्स्वाविधवाजनोचिते पथीति पत्न्यै चिरमाशिषं जगौ ॥ ६४

---

य अर्धलक्षितं विधाय कृत्वा अर्धं यथा जनैर्दृश्येत तथा बहिः कृत्वेत्यर्थः । नृपतौ रामचंद्रे दूरं यथा स्यात्तथा याति सति गच्छति सति दिदृक्षया द्रष्टुमिच्छया । दृश्धातोः सन्नन्तात् 'अ प्रत्ययात्' इत्यनेन अप्रत्ययः । वातायनात् बाह्यं वातायनबाह्यं चकार विदधौ ॥ ६० ॥

अतिष्ठदिति । उन्नतौ स्तनौ यस्याः सा उन्नतस्तनी 'स्वाङ्गाच्चोपसर्जनात्' इति ङीष् । एका स्त्री कुचयोर्युग्मं तस्य संपत् संपत्तिः तया वातायनं गवाक्षं निरुद्ध्य अवरुद्ध्य अतिष्ठत् । सखीजनः यस्याः कृशो यो मध्यभागः तस्मात् पताकिनीं सेनां वीक्षितुं अवलोकयितुं अन्तरं अवकाशं आप प्राप । काचित् स्त्री महाकुचयुग्मेन गवाक्षं निरुद्ध्य स्थिताऽपि तत्सखीजनः तस्याः कृशमध्यभागात् तेनावकाशेनैव सेनां ददर्श इति तात्पर्यम् ॥ ६१ ॥

निधायेति । काचित् तनु कृशं उदरं यस्याः सा तनूदरी 'नासिकोदरोष्ठ–' इत्यादिना ङीष् । तनयं पुत्रं वातायनस्य या देहली गृहावग्रहणी तस्यास्तले प्रसह्य निधाय बलात् हठात् बालकं पंकजस्य कमलस्य यः कोशः कुड्मलः तद्वत् कोमलं एतादृशं अञ्जलिं महीभुजे रामाय अकारयत् । 'हृक्रोरन्यतरस्याम्' इत्यनेन अणिकर्तुर्बालकस्य णौ कर्मत्वम् ॥ ६२ ॥

नृप इति । नृपः रामचंद्रः सुमित्रायाः तनयः पुत्रः लक्ष्मणः वधूः सीता इति प्रियाजने प्रियासमूहे स्वयं स्वतः करैः हस्तैः निर्दिशति सति निर्देशं कुर्वति सति तलानां प्रभा कान्तिः तेन पाटलः श्वेतरक्तः यो भागः तस्य भागिनः सेविनः तद्युक्ता इत्यर्थः । नखानां अंशवः किरणाः तेषां जालाः समूहाः जालशब्दस्य पुंस्त्वं चिन्त्यम् । तेऽपि अम्बरे आकाशे चेरुः जग्मुः । प्रकाशिरे इत्यर्थः ॥ ६३ ॥

अशक्नुवन्निति । वधूजनः स्त्रीजनः अधृष्टतया अप्रागल्भ्येन तम् नृपात्मजं दशरथपुत्रं रामचंद्रमित्यर्थः । जयेन वर्धयितुं 'जय जयोऽस्तु' इत्यादिशब्दैः आशिषं दातुं इत्यर्थः । शक्नोतीति शक्नुवन् तथा न इति अशक्नुवन् सन् अविधवाजनः सौभाग्यवतीजनः तस्य उचिते योग्ये अध्वनो वा 'अध्वन्येऽप्युचितं न्याय्ये' इत्यमरः (1) तस्मिन् पथि मार्गे पदं विधत्स्व स्थापय इति पत्न्यै सीतायै चिरं चिरकालं आशिषं आशीर्वादं जगौ उच्चारयामास ॥ ६४ ॥

नरेन्द्रसेना विविशुः समुद्रगा
 विवृद्धतोया इव यत्समन्ततः ।
महार्णवस्येव न तस्य तत्कृतो
 बभूव पूरस्य न चातिरिक्तता ॥ ६५ ॥
द्विधागतं द्वारमुपेत्य तद्बलं
 नृपाङ्गनस्योभयभागसंश्रितम् ।
निबध्यमानाञ्जलि शासिता भुवो
 दृशाऽनुगृह्णन् स विवेश मन्दिरम् ॥ ६६ ॥
देशं सुधाजिति जिते तनुजे तपोर्थी
 विन्यस्य केकयपतिर्विपिनं विविक्षुः ।
दूतेन तेन तनयं दुहितुर्दिदृक्षुः
 कालस्य कस्यचिदथेन्द्रसमं ययाचे ॥ ६७ ॥

---

नरेंद्रसेना इति । विवृद्धं तोयं उदकं यासां एतादृश्यः समुद्रं गच्छंतीति समुद्रगाः नद्यः 'अन्येष्वपि दृश्यते' इति डप्रत्ययः। ता इव नरेंद्रस्य दशरथस्य सेनाः समंततः यद्विविशुः महांश्चासौ अर्णवश्च महार्णवः तस्येव तस्य पुरस्य तत्कृतः सेनाप्रवेशकृतः पूरः न बभूव अतिरिक्तता आधिक्यं च न बभूव । महापूरपूर्णनदीभिः समुद्रस्य यथा पूरः अतिरिक्तता च न भवति तद्वत् सर्वत्र सेनाप्रवेशेऽपि तस्य नगरस्य पूरः अतिरिक्तता च नाभूत् । एतेन तस्याः पुर्या अतिविशालत्वं ध्वनितम् ॥ ६५ ॥

द्विधागतमिति । द्वारं उपेत्य द्विधा द्विप्रकारेण गतं नृपस्य अंगनं अजिरं तस्य उभयभागौ प्रति संश्रितं स्थितं 'रुदूपहणे गतिकारकपूर्वस्यापि ग्रहणं' इत्यनेन संश्रितशब्देन उभयभागशब्दस्य द्वितीयांतस्य 'द्वितीयाश्रित' इत्यादिना समासः । निबध्यमानः रचितः अंजलिः करसंपुटो येन एतादृशं तद्बलं सैन्यं भुवः पृथ्व्याः शासिता स रामचंद्रः दृशा दृष्ट्या अनुगृह्णन् सन् मंदिरं गृहं विवेश ॥ ६६ ॥

देशमिति । तप एव अर्थः प्रयोजनं स अस्यास्तीति तपोर्थी एतादृशः केकयानां केकयदेशानां अधिपतिः सुधाजिति एतन्नामके तनुजे पुत्रे जितं देशं विन्यस्य स्थापयित्वा पुत्राधीनं कृत्वेत्यर्थः । विपिनं अरण्यं विविक्षुः विशधातोः सन्नंतात् 'सनाशंसभिक्ष उः' इत्यनेन उप्रत्ययः । अथ वनविविक्षानंतरं दुहितुस्तनयं भरतमित्यर्थः । दिदृक्षुः अत् द्रष्टुमिच्छुः सन् कस्यचित् कालस्य कस्मिंश्चित्काले इत्यर्थः । संबंधसामान्ये षष्ठी । दूतेन दूतीकृतेन तेन सुधाजिता इंद्रस्य समः इंद्रसमः 'राजाहःसखिभ्यष्टच्' इति टच्प्रत्ययः । तं दशरथं प्रति ययाचे । टुयाचृ याच्ञायां कर्तरि लिट् । याचेर्द्विकर्मकत्वात् अत्र तनयं इति द्वितीयं कर्म ॥ वसन्ततिलकं वृत्तम् 'ज्ञेयं वसन्ततिलकं तभजा जगौ गः' इति लक्षणात् ॥ ६७ ॥

अतिष्ठदेका कुचयुग्मसम्पदा निरुद्ध्य वातायनमुन्नतस्तनी ।
सखीजनो यत्कृशमध्यमागतः पताकिनीमन्तरमाप वीक्षितुम्॥६१॥
निधाय काचित्तनयं तनूदरी प्रसह्य वातायनदेहलीतले ।
अकारयत्पङ्कजकोशकोमलं महीभुजे बालकमञ्जलिं बलात् ॥ ६२ ॥
नृपः सुमित्रातनयो वधूरिति प्रियाजने निर्दिशति स्वयं करैः ।
तलप्रभापाटलभागभागिनो नखांशुजाला अपि चेरुरम्बरे ॥ ६३ ॥
अशक्नुवन् वर्धयितुं नृपात्मजं वधूजनोऽधृष्टतया जयेन तम् ।
पदं विधत्स्वाविधवाजनोचिते पथीति पत्न्यै चिरमाशिषं जगौ॥६४

च अर्धलक्षित विधाय कृत्वा अर्धं यथा जनैर्दृश्येत तथा बहिः कृत्वेत्यर्थः । नृपतौ रामचंद्रे दूरं यथा स्यात्तथा प्रयाति सति गच्छति सति दिदृक्षया द्रष्टुमिच्छया । दृशधातोः सन्नंतात् 'अप्रत्ययात्' इत्यनेन अप्रत्ययः । वातायनात् बाह्यं वातायनबाह्य चकार विदधौ ॥ ६० ॥

अतिष्ठदिति । उन्नतौ स्तनौ यस्याः सा उन्नतस्तनी 'स्वाङ्गाच्चोपसर्जनात्' इति ङीप् । एका स्त्री कुचयोर्युग्मं तदेव संपत् संपत्तिः तया वातायनं गवाक्षं निरुद्ध्य अवरुद्ध्य अतिष्ठत् । सखीजनः यस्याः कृशो यो मध्यभागः तस्मात् पताकिनीं सेनां वीक्षितुं अवलोकयितुं अंतरं अवकाशं आप प्राप । काचित् स्त्री महाकुचयुग्मेन गवाक्षं निरुद्ध्य स्थितापि तत्सखीजनः तस्याः कृशमध्यत्वात् तेनावकाशेनैव सेनां ददर्श इति तात्पर्यम् ॥ ६१ ॥

निधायेति । काचित् तनु कृशं उदरं यस्याः सा तनूदरी 'नासिकोदरोष्ठ-' इत्यादिना ङीष् । तनयं पुत्रं वातायनस्य या देहली महाद्वारस्थली तस्यास्तले प्रसह्य निधाय बलात् हठात् बालकं पंकजस्य कमलस्य यः कोशः कुड्मलः तद्वत् कोमलं एतादृशं अंजलिं महीभुजे रामाय अकारयत् । 'हृक्रोरन्यतरस्याम्' इत्यनेन अणिकर्तुर्बालकस्य णौ कर्मत्वम् ॥ ६२ ॥

नृप इति । नृपः रामचंद्रः सुमित्रायाः तनयः पुत्रः लक्ष्मणः वधूः सीता इति प्रियाजने प्रियासमूहे स्वयं स्वतः करैः हस्तैः निर्दिशति सति निर्देशं कुर्वति सति तलानां प्रभा कांतिः तेन पाटलः श्वेतरक्तः यो भागः तस्य भागिनः सेविनः नखांशुका इत्यर्थः । नखानां अंशवः किरणाः तेषां जालाः समूहाः । जालशब्दस्य पुंस्त्वं चिन्त्यम् । तेऽपि अंबरे आकाशे चेरुः जग्मुः । प्रसासिरे इत्यर्थः ॥ ६३ ॥

अशक्नुवन्निति । वधूजनाः स्त्रीजनाः अधृष्टतया अप्रागल्भ्येन तं नृपात्मजं दशरथसुतं रामचंद्रमित्यर्थः । जयेन वर्धयितुं 'तव जयोऽस्तु' इत्यादिशब्दैः आशिषं दातुमित्यर्थः । शक्नोतीति शक्नुवन् तथा न इति अशक्नुवन् सन् अविधवाजनः सौभाग्यवतीजनः तस्य उचितः योग्यः अभ्यस्तो वा 'अभ्यस्तेऽप्युचितं न्याय्ये' इत्यमरः (?) तस्मिन् पथि मार्गे पदं विधत्स्व स्थापय इति पत्न्यै सीतायै चिरं चिरकालं आशिषं आशीर्वादं जगौ उच्चारयामास ॥ ६४ ॥

नरेन्द्रसेना विविशुः समुद्रगाः
　विवृद्धतोया इव यत्समन्ततः ।
महार्णवस्येव न तस्य तत्कृतो
　बभूव पूरश्च न चातिरिक्तता ॥ ६५ ॥
द्विधागतं द्वारमुपेत्य तद्बलं
　नृपाङ्गनस्योभयभागसंश्रितम् ।
निषण्यमानाञ्जलि शासिता भुवो
　दृशाऽनुगृह्णन् स विवेश मन्दिरम् ॥ ६६ ॥
देशं सुधाजिति जिनं तनुजे तपोर्थी
　विन्यस्य केकयपतिर्विपिनं विविक्षुः ।
दूतेन तेन तनयां दुहितुर्दिदृक्षुः
　कालस्य कस्यचिदयेन्द्रसखं ययाचे ॥ ६७ ॥

---

नरेन्द्रसेना इति । विवृद्धं तोयं उदकं यासां एतादृश्यः समुद्रं गच्छंतीति समुद्रगाः नद्यः 'अन्येष्वपि दृश्यते' इति डप्रत्ययः। ता इव नरेंद्रस्य दशरथस्य सेनाः समंततः प्रविविशुः महाश्चासौ अर्णवश्च महार्णवः तस्येव तस्य पुरस्य तत्कृतः सेनाप्रवेशकृतः पूरः न बभूव अतिरिक्तता आधिक्यं च न बभूव । महापूरपूर्णनदीभिः समुद्रस्य यथा पूरः अतिरिक्तता च न भवति तद्वत् सर्वत्र सेनाप्रवेशेऽपि तस्य नगरस्य पुरः अतिरिक्तता च नाभूत् । एतेन तस्याः पुर्याः अतिविशालत्वं ध्वनितम् ॥ ६५ ॥

द्विधागतमिति । द्वारं उपेत्य द्विधा द्विप्रकारेण गतं नृपस्य अंगनं अजिरं तस्य उभयभागौ तनि संश्रितं स्थितं ' तद्रूपहणे यनिकारकपूर्वस्यापि ग्रहणं ' इत्यनेन संश्रितशब्देन उभयभागशब्दस्य द्वितीयान्तस्य 'द्वितीयाश्रितै' इत्यादिना समासः । निषण्यमानः रचितः अंजलिः करसंपुटो येन एतादृशं तद्बलं तेन भुवः पृथ्व्याः शासिता स रामचंद्रः दृशा दृष्ट्या अनुगृह्णन् सन् मंदिरं गृहं विवेश ॥ ६६ ॥

देशमिति । तप एव अर्थः प्रयोजनं स अस्यास्तीति तपोर्थी एतादृशः केकयानां केकयदेशानां अधिपतिः सुधाजिति एतन्नामके तनुजे पुत्रे जितं देशं विन्यस्य स्थापयित्वा पुत्राधीनं कृत्वेत्यर्थः । विपिनं अरण्यं विविक्षुः विशधातोः सन्नंतात् ' सनाशंसभिक्ष उः ' इत्यनेन उप्रत्ययः । अथ वनविविक्षानंतरं दुहितुस्तनयं भरतमित्यर्थः । दिदृक्षुः सन् द्रष्टुमिच्छुः सन् कस्यचित् कालस्य कस्मिंश्चित्काले इत्यर्थः । संबंधसामान्ये षष्ठी । दूतेन दूतीकृतेन तेन सुधाजिता इंद्रस्य सखा इंद्रसखः ' राजाहःसखिभ्यष्टच् ' इति टच्प्रत्ययः । ■ दशरथं प्रति ययाचे । टुयाचृ याञ्चायां कर्तरि लिट् । याचेर्द्विकर्मकत्वात् अत्र तनयं इति द्वितीयं कर्म ॥ वसन्ततिलकं वृत्तम् ' ज्ञेयं वसंततिलकं तभजा जगौ गः ' इति लक्षणात् ॥ ६७ ॥

मामियं प्राणनिर्याणवैजयन्ती पुरःसरी ।
रक्ताक्षवाहनादेशदूती संसेवते जरा ॥ ५ ॥
जरसा तात मेऽङ्गानि स्पृहा कामेषु निर्विदा ।
शैथिल्यमुपनीतानि तुल्यमेव शनैः शनैः ॥ ६ ॥
कालेन शिरसि न्यस्तैः श्वेतकेशशिताङ्कुशैः ।
निवर्तन्ते हि कामेभ्यो भद्रा राघवदन्तिनः ॥ ७ ॥
उभे वक्षसि वंश्यानां तिष्ठतो रक्तकर्कशे ।
यौवने वनिता वल्कसन्ततिर्वार्धके च नः ॥ ८ ॥

---

इत्यमरः । समासीनः उपविष्टः भुवः पृथिव्याः नाथः अधिपतिः दशरथ इत्यर्थः । स्वं आत्मीयं अतिशयेन प्रशस्यः इति ज्यायान् 'प्रशस्यस्य श्रः' 'ज्य च' इति ज्यादेशः 'ज्यादादीयसः' इति ईयसः आदादेशश्च, तं ज्येष्ठमित्यर्थः । सुतं पुत्रं अङ्कं उत्सङ्गं 'उत्सङ्गचिह्नयोरङ्कः' इत्यमरः । आरोप्य अब्रवीत् । ब्रूञो लङि रूपम् ॥ अनुप्रासालङ्कारः ॥ ४ ॥

किमब्रवीत्तदाह—मामिति । प्राणानां असूनां यन्निर्याणं गमनं तस्य वैजयन्ती पताका । यथा प्रयाणसमये ध्वजः उन्नीयते तद्वत् प्राणनिर्याणस्य ध्वजभूता एतादृशी पुरः अग्रतः सरतीति पुरःसरी 'पुरोऽग्रतोऽग्रेषु सर्तेः' इति टः । रक्ते आरक्ते अक्षिणी यस्य स रक्ताक्षः । 'अच्' इति योगविभागात् समासान्तोऽच् । एतादृशः महिषः वाहनं यस्य स यमः तस्य आदेशदूती आज्ञाकारी दूतीत्यर्थः । एतादृशी इयं समीपं प्राप्ता जरा मां दशरथं प्रति संसेवते ॥ ५ ॥

जरसेति । हे तात । तातेति कोमलामन्त्रणे । जरसा जरया नः अस्माकं अङ्गानि अवयवाः निर्विदा वैराग्येण । निरपूर्वात् विदधातोः सम्पदादित्वात् भावे क्विप् । कामेषु भोग्यवस्तुषु इत्यर्थः । स्पृहा इच्छा इति उभयमित्यर्थः । शनैः शनैः तुल्यमेव सममेव शैथिल्यं शिथिलत्वं उपनीतानि प्रापितानि उपनीता च उपनीतानि च उपनीतानि इति 'नपुंसकमनपुंसकेन' इत्येकशेषः । तेन निर्विदा कामेषु स्पृहा शैथिल्यमुपनीता । जरसा अङ्गानि शैथिल्यमुपनीतानीति फलितम् ॥ ६ ॥

कालेनेति । कालेन मृत्युनेत्यर्थः । शिरसि मस्तके न्यस्तैः क्षिप्तैः श्वेतकेशा एव शिताः तीक्ष्णा अङ्कुशा तैः भद्राः राघवाः रघुकुलोत्पन्ना एव दन्तिनः हस्तिनः ते कामेभ्यः विषयेभ्यः निवर्तन्ते हि ॥ रूपकालङ्कारः ॥ ७ ॥

उभे इति । वंशे भवाः वंश्याः तेषां नः अस्माकं वक्षसि रक्तेन कर्कशं कठिनं तस्मिन् यूनः भावः यौवनं तस्मिन् । 'हायनान्तयुवादिभ्योऽण्' इति भावे अण्-प्रत्ययः । 'अन्' इति प्रकृतिभावः । तारुण्ये वनिता स्त्री च वार्धके वृद्धत्वे वल्कानां वल्कलानां सन्ततिः परम्परा इति उभे तिष्ठतः । यौवने स्त्रीभिर्विलासः, वार्धके च वल्कलपरिधानपूर्वकं अरण्ये वासः इति उभयमस्माकं कुलमतमिति तात्पर्यम् ॥ ८ ॥

जीविते जीर्णवयस. प्रत्याशा मे मुमूर्षतः ।
तिर्यग्विकम्पितैर्मूर्ध्नो नास्तीति प्रथयन्निव ॥ १४ ॥
दन्तकुन्तशतैरुग्रैर्मृत्यो. सङ्कटमाननम् ।
प्रवेष्टुमिव बिभ्राण. कायसङ्कोचपर्वताम् ॥ १५ ॥
विभ्रदातङ्कनिर्मांसव्यक्तलक्ष्यसमुद्गमाः ।
वीचीरिव जरानद्या. पर्शुकास्थिपरम्पराः ॥ १६ ॥
निर्दन्तत्वादसंस्कार महान्मुष्टिन्धयो यथा ।
मिथोऽशंसितमस्पष्टं वदन्नम्बूकृतं वचः ॥ १७ ॥

---

पलितस्य जराशौक्ल्यस्य छटा. समूहान् यौवनस्य तारुण्यस्य उद्दाह दहन तत्सपाधि भस्मेव विभूतिरिव दधान. धारयन् ॥ उपमालङ्कारः ॥ १३ ॥

जीविते इति । जीर्णं वयो यस्य स जीर्णवयाः तस्य अतएव मुमूर्षतः मर्तुमिच्छो । 'मृङ् प्राणत्यागे' अस्मात्सनिः शतृप्रत्ययः । मे मम जीविते जीवने प्रत्याशा नास्ति इति मूर्ध्नः मस्तकस्य तिर्यक् वक्राणि यानि विकम्पितानि कम्पाः तै. प्रथयन्निव प्रख्यापयन्निव । 'प्रथ प्रख्याने' णिजन्तात् शतृप्रत्ययः ॥ उत्प्रेक्षालङ्कार. ॥ १४ ॥

दन्तेति । उग्रैः दन्ता दशना एव कुन्तास्तेषां शतानि तैः सङ्कट सबाधं मृत्यो. आनन मुख प्रवेष्टुमिव कायस्य देहस्य य. सङ्कोच. सङ्कुचितत्वं तेन सर्वतो व्यस्वता बिभ्राण । भिञः लटः शानच् । शपः श्लौ द्वित्व 'भृञामित्' इति इत्वम् । यथा कश्चित् विषमस्थले प्रवेष्टु अङ्गसङ्कोच करोति तद्वत् तीक्ष्णाग्रदन्तसङ्कटे मृत्योर्मुखे प्रवेष्टुमिव अङ्गसङ्कोचं बिभ्राण इत्यर्थ. ॥ उत्प्रेक्षालङ्कार. ॥ १५ ॥

बिभ्रदिति । आतङ्का. रोगाः तै निर्मांस मांसाभावः । अर्थाभावेऽव्ययीभाव. तेन व्यक्तः अतएव लक्ष्यः दृश्यः समुद्गम. आविर्भावो यासां एतादृशी । जरैव नदी तस्या. वीचीरिव ऊर्मीरिव पर्शुकास्थ्नां पार्श्वास्थ्नाम् 'पार्श्वास्थनि तु पर्शुका' इत्यमर । परंपराः पङ्क्तीरित्यर्थः । बिभ्रत् धारयन् । डुभृञ् धारण-पोषणयो. । लट. शत्रादेश 'नाभ्यस्तस्य' इति नुमनिषेध ॥ उत्प्रेक्षालङ्कार. रूपक च ॥ १६ ॥

निर्दन्तत्वादिति । निर्गता दन्ता यस्य स निर्दन्त. तस्य भावो निर्दन्तत्व तस्मात् दन्तराहित्यादित्यर्थ. । असंस्कार संस्कार. शिक्षोक्तदन्तस्थानाद्युत्पत्तिसंस्कार नास्ति यस्य तत् मिथ. अन्योन्य अशंसित अकथितमिव उक्तेपि वर्णानां तत्तत्स्थानादनुत्पत्ते. । अनुच्चारप्राय अथवा अशंसित अस्तुत अस्पष्टत्वात् निन्द्यमित्यर्थ. । शंसधातो क्तप्रत्यय । अतएव अस्पष्ट अम्बूकृत सनिष्ठीवं एतादृश वचः भाषणं महानपि मुष्टि धयतीति मुष्टिंधयः 'नाडीमुष्ट्योश्च' इत्यनेन खश् 'खित्यनव्ययस्य' इति मुमागमः । स यथा तथा वदन् ॥ १७ ॥

भिन्नभ्रूयष्टिमुदस्ताक्षीं किञ्चित्कम्पितमस्तकाम् ।
नम्रो गद्गदितालापामनुनेतुं जरामिव ॥ १८ ॥
वार्धक्ये धर्मतो मूढः स्वदेहवहनेऽपि सः ।
विधित्सन्नप्यशक्तिष्ठस्तपः कीदृग्विधास्यति ॥ १९ ॥
अतो यातु तपस्यायामरण्ये वसतिं त्वया ।
माजन्यश्रुप्रवर्षेण प्रत्यूहो मे विरागिणः ॥ २० ॥
अनुशिष्टिः प्रकृत्यैव भद्रे भवति कीदृशी ।
मनसः प्रीतये स्नेहकातरस्य निगद्यते ॥ २१ ॥
औदासीन्यं यतः शत्रुरुदासीनश्च मित्रताम् ।
मित्रं भर्त्तौ हृदयं च याति तद्वक्तुमर्हसि ॥ २२ ॥

---

भिन्नेति । भिन्ना भ्रूः भ्रुकुटिर्यस्याम् । पक्षे वक्रदृष्टिम् । उदस्तानि उत्क्षिप्तानि अक्षाणि यस्याम् । पक्षे रुदतीम् । किञ्चित् कम्पितं वेपितं मस्तकं शिरो यस्याम् । पक्षे ईर्ष्यया उत्कम्पितशिरस्काम् । गद्गदित आलापो भाषणं यस्याम् । पक्षे स एव । एतादृशीं जरां अनुनेतुमिव नम्रः नतः । समासोक्त्यलङ्कारः उत्प्रेक्षालङ्कारश्च ॥ १८ ॥

वार्धक्ये इति । वार्धक्ये स्थाविरे धर्मतः वर्णाश्रमधर्मेण स्वस्य देहः शरीरं तस्य वहनेऽपि धारणेऽपि मूढः सः वृद्धः विधित्सन् अपि विधातुमिच्छन्नपि विपूर्वाद्धाञ् सनि सनिमीमा इत्यादिना इसादेशोऽभ्यासलोपः अशक्तिष्ठः शक्त्या तिष्ठतीति शक्तिष्ठः । सुपीति कः । तथा न भवतीति तथा एतादृशः सन् कीदृक् तपः विधास्यति करिष्यति । विपूर्वाद्धाञो लृट् ॥ १९ ॥

अत इति । अतः वृद्धत्वे तपस्यासम्भवाद्धेतोः अरण्ये तपस्यायां विषये वसतिं वासं यातु गच्छतु विरागिणः विरागः विषयेष्वनभिरागः सोऽस्यास्तीति विरागी एतादृशस्य मे त्वया रामचन्द्रेण अश्रूणां नेत्रोदकानां प्रवर्षणं वर्षणेन प्रत्यूहः विघ्नः 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः । माजनि माभूत् । जनधातोः 'माङि लुङ्' इति कर्तरि लुङ् ॥ २० ॥

सर्वज्ञत्वात्त्व अनुशिष्टिर्व्यर्था तथापि स्नेहो मां भाषयतीत्याह—अनुशिष्टिरिति । प्रकृत्यैव स्वभावेनैव भद्रे । उत्तमे इत्यर्थः । निर्दोषे इति यावत् । भवति त्वयि अनुशिष्टिः अनुशासनं कीदृशी कथं भवतु । व्यर्थेत्यर्थः । तर्हि मामनुशिष्टिरित्यत आह—मनस इति । स्नेहेन कातरः तस्य मनसः अन्तःकरणस्य प्रीतये सन्तोषाय निगद्यते कथ्यते ॥ २१ ॥

श्रीरामचन्द्रं प्रति उपदेष्टुमारभते—औदासीन्यमिति । यतः यस्मात्कारणात् शत्रुः रिपुः उदासीनस्य भावः औदासीन्यं मित्रत्वशत्रुत्वरहितत्वं याति । उदासीनः मित्रत्वशत्रुत्वरहितः मित्रस्य सख्युः भावो मित्रता तां याति । मित्रं सुहृत् भर्त्तौ स्नेहे हृदयं च श्रेयमित्यर्थः । याति तत् तादृशं भाषणं वक्तुमर्हसि ॥ २२ ॥

यो येन वाञ्छति ख्यातिं लोकसंग्रहकामिना ।
न तस्य निन्दनीयं तच्छत्रुतामप्यनिच्छता ॥ २३ ॥
वृत्तिः शुभकरी साम्नो नये स्वपररञ्जनी ।
आयःशूलिकतेत्याहुर्न तां निष्णातबुद्धयः ॥ २४ ॥
जिघांसुभिरपि प्राज्ञैः प्रयोक्तु साम साम्प्रतम् ।
रञ्जयन्ति मृगान् गीतैर्बिभित्सन्तो मृगाविधः ॥ २५ ॥
साम शाठ्यं जनो वेत्ति दानादत्यन्तवर्जितम् ।
तत्सामौशनसं साधु युक्तं दानस्य मात्रया ॥ २६ ॥

य इति । यः पुरुषः येन कर्मणा ख्यातिं प्रसिद्धिं वाञ्छति इच्छति । लोकानां संग्रहः लोकरञ्जनमित्यर्थः । तत् कामयते स लोकसंग्रहकामी लोकसंग्रहेच्छु-रित्यर्थः । तेन शत्रुतां शत्रुत्वं अनिच्छता । राज्ञेति शेषः । तस्य तत् कर्म न निन्दनीयं न द्वेष्यम् । अपिः संभावनायाम् ॥ २३ ॥

इदानीं सामादिचतुष्टयं यथायथं प्रयोक्तव्यमित्याह–वृत्तिरिति । नये नीतौ साम्नः स्वं च परश्च स्वपरौ तयोः रंजनी, उभयानुकूलेत्यर्थः । वृत्तिः शुभं करोति तच्छीला शुभकरी । अस्तीति शेषः 'कृञो हेतुताच्छील्ये' ति टप्रत्ययः । अयःशूलं तीक्ष्णोपायः तेन अन्विच्छति अयःशूलिकः । 'अयःशूलदण्डाजिनाभ्यां ठक्ठञौ ' इति ठक्प्रत्ययः । तस्य भावः आयःशूलिकता । तीक्ष्णोपाय इत्यर्थः । सा शुभकरी इति केचित् आहुः । निष्णाता कुशला बुद्धिः येषां ते निष्णातबुद्धयः ' निनदीभ्यां स्नातेः कौशले ' इति षत्वम् । तां आयःशूलिकतां न शुभकरी नेति प्राहुरित्यर्थः । किंतु साम्नो .वृत्तिरेव शुभकरीति प्राहुः ॥ २४ ॥

जिघांसुभिरिति । हन्तुमिच्छवः जिघांसवः तैः जिघांसुभिरपि हननेच्छुभिरपि । हन्तेः सन्नन्तात् 'सनाशंसभिक्ष उः' इत्युप्रत्ययः । प्राज्ञैः विद्वद्भिः साम सान्त्वं प्रयोक्तुं साम्प्रतं योग्यम् । ननु सान्त्वेन कथं हननं स्यात् अत आह–रञ्जयन्तीति । बिभित्सन्तः भेत्तुमिच्छन्तः । भिदेः सन्नन्तात् शतृप्रत्ययः । एतादृशाः मृगान् हरिणान् विध्यन्ति ताडयन्ति इति मृगाविधः । मृगशब्दे उपपदे 'व्यध ताडने' अस्मात् ' क्विप् च ' इति क्विप् । ग्रहिज्येति संप्रसारणे 'नहिवृतिवृषिव्यधि—' इत्यादिना पूर्वपदस्य दीर्घः ॥ मृगाविधः व्याधाः गीतैः गेयैः मृगान् कुरंगान् रञ्जयन्ति । अत्र ' रञ्जेर्मृगरमणे न लोपो वक्तव्यः ' इति नलोपो न भवति । एतद्वाक्यस्य अनुवादत्वेन मृगरमणाभावात् । अर्थान्तरन्यासालंकारः ॥ २५ ॥

सामापि ' निरत्ययं साम न दानवर्जितम् ' इत्युक्तेः दानवर्जं न कार्य-मित्याह–सामेति । दानात् वित्तार्पणात् अत्यन्तं वर्जितं अत्यन्तवर्जितं, आत्यन्तिकदानरहितमित्यर्थः । एतादृशं साम जनः लोकः शाठ्यं इति वेत्ति इदानीं उत्तमसाम स्वरूपमाह–तदिति । यत् साम दानस्य मात्रया लेशेन युक्तं तत् औशनसं उशनसा प्रोक्तम् । 'तेन प्रोक्तं ' इत्यण् । साम साधु भवतीति शेषः ॥ २६ ॥

मा दा रहितसन्मानं त्यक्त्वा सत्कारसामनी ।
वित्तं विश्राणितं नीतौ कृतिनो दूषितं विदुः ॥ २७ ॥
शत्रुगृह्येण दुर्धर्षं शत्रुं नेता निहन्ति हि ।
घनेनेव स्फुलिङ्गार्चिःप्रावृत्तं पिण्डमायसम् ॥ २८ ॥
उपजापहृतस्वामिस्नेहसीमाश्रि पराश्रयम् ।
मौले वाञ्छति मेदिन्याः पत्युः पातो न संशयः ॥ २९ ॥
इतरोपायदुःसाध्ये चण्डदण्डो महीपतिः ।
अदुष्टायत्यसौ भीतेरश्नाति विपुलं फलम् ॥ ३० ॥
अत्याहृति न शक्यं गौर्विना दण्डेन रक्षितुम् ।
इति प्रत्येति मुग्धोऽपि बल्लवः किमु राजकम् ॥ ३१ ॥

---

इदानीं दानं विधत्ते—मा देति । रहितः विरहितः सम्मानः सत्कारः यस्मिन् तत् यथा स्यात्तथा मा दाः न देहीत्यर्थः । कुत इति चेत्तत्राह—त्यक्त्वेति । सत्कारश्च साम च सत्कारसामनी ते त्यक्त्वा हित्वा विश्राणितं दत्तं वित्तं कृतिनः विद्वांसः नीतौ नये दूषितं दूषणं 'नपुंसके भावे क्तः' । विदुः जानन्ति । विद्धातोः 'विदो लटो वा' इत्यनेन लट उसादेशः ॥ २७ ॥

इदानीं भेदमाह—शत्रुगृह्येणेति । नेता नायकः राजेत्यर्थः । स्फुलिङ्गानां अग्निकणानां अर्चींषि तैः प्रावृतम् । आयस अयसः अयं आयसः तं लोहम् । पिण्डं गोलम् । घनेनेव लोहताडनसाधनेन लोहेन देहविशेषेणेव दुःसहेन धृष्यते इति दुर्धर्षः 'ईषद्दुःसु' इत्यादिना खल् । तं शत्रुं रिपुं शत्रुगृह्येण शत्रुपक्षीयेणेत्यर्थः । 'पदास्वैरिबाह्यापक्ष्येषु च' इति क्यपि सम्प्रसारणम् । निहन्ति हि नाशयत्येव 'हि हेताववधारणे' इत्यमरः ॥ २८ ॥

उपजापेति । उपजापो भेदः 'भेदोपजापौ' इत्यमरः । तेन हृता स्वामिनि स्नेहसीमा स्नेहपराकाष्ठा यस्य एतादृशो मौले आप्तसचिवस्ते 'मौलैराप्तैरमात्यैस्तु सचिवैरिति' इत्यत्र आप्तैः सचिवैरिति मल्लिनाथेन तथा व्याख्यातत्वात् । परस्य इतरस्य आश्रयः तं वाञ्छति सति इच्छति सति मेदिन्याः पृथ्व्याः पत्युः पातः राज्यभ्रंश इत्यर्थः । न संशयः संशयो नास्तीत्यर्थः ॥ २९ ॥

इदानीं चतुर्थमुपायमाह—इतरेति । इतरे इतरेतरे ये उपायाः सामादयः तैः दुःसाध्ये साधयितुमशक्ये सति यः महीपतिः चण्डः भयकरः दण्डो यस्य एतादृशो भवति असौ राजा अदुष्टा आयतिः उत्तरकालो यस्य चिरस्थायीत्यर्थः । एतादृशो भीतेः भयस्य विपुलं विशालं महदित्यर्थः । फलं अश्नाति भुङ्क्ते ॥ ३० ॥

अत्याहृतीति । दण्डं विना गौः अत्याहृति नास्ति अत्याहृतिर्यस्मिन् तद्यथा स्यात्तथा रक्षितुं न शक्या इति मुग्धोऽपि बल्लवः गोपः प्रत्येति जानाति ।

क्षोणीपतिः पतत्याशु जराक्रान्त इव ध्रुवम् ।
त्यक्तदण्डः पदं वाञ्छन्नगृहीतजगत्करः ॥ ३२ ॥
इत्थं युक्तिमुपायानां कुर्वाणस्य चतुष्टयीम् ।
व्रजतीन्दुप्रभागौरं परैरक्षय्यतां यशः ॥ ३३ ॥
शूरं पुरुषसारज्ञं नीतौ पटुमलम्पटम् ।
सम्यक् संरक्षिताः कोशैर्वर्धयन्ति नृपं प्रजाः ॥ ३४ ॥
नोच्चैः पदं लम्भनीयो गुण्योऽप्यन्वयवर्जितः ।
रत्नाढ्यमपि कुर्वीत मूर्ध्नि कः पादमण्डनम् ॥ ३५ ॥

---

राजकं राज्ञां समूहः 'गोत्रोक्षोष्ट्रोरभ्रराज' इत्यादिना समूहेऽर्थे वुञ्प्रत्ययः 'यस्येति च' इति टिलोपः । प्रतीयात् किमु वक्तव्यम् ॥ ३१ ॥

क्षोणीपतिरिति । त्यक्तः दण्डः चतुर्थोपायः—पक्षे लगुडश्च येन । अगृहीतः जगतः प्रजाभ्यः करः बलिः येन 'भागधेयः करो बलिः' इत्यमरः । पक्षे न गृहीतः अवलम्बनार्थं जगतः करो हस्तो येन एतादृशः पदं राज्य पक्षे स्वस्थानं वाञ्छन् इच्छन् क्षोणीपतिः राजा जरया आक्रान्तः जराक्रान्त इव ध्रुवं निश्चयेन आशु शीघ्रं पतति ॥ श्लेषोपमालङ्कारौ ॥ ३२ ॥

इत्थमिति । इत्थं अनेन प्रकारेण 'इदमस्थमुः' इति थमुप्रत्ययः । 'एतेतौ रथोः' इति इदादेशः । उपायानां सामाद्युपायानां चत्वारः अवयवाः यस्याः सा चतुष्टयी 'संख्याया अवयवे तयप्' इति तयपि 'टिड्ढेति' ङीप् । युक्तिं योगं कुर्वाणस्य इन्दोःप्रभेव प्रभेव गौरं यशः कीर्तिः परैः शत्रुभिः क्षेतुं शक्यं क्षेयम् 'क्षय्यजय्यौ शक्यार्थे' इति निपातनात्साधुः । तथा न भवतीति अक्षय्यस्य तस्य भावः अक्षय्यता तां व्रजति । उपमालङ्कारः ॥ ३३ ॥

इत्थं उपायचतुष्टयं प्रदर्श्य सामान्यतो नीतिमाह शूरमिति । शूरं वीरम् । पुरुषाणां सारः बलं पुरुषश्रेष्ठं वा जानातीति पुरुषसारज्ञः तम् । नीतौ नये पटुं निपुणम् । लम्पटो न भवतीति अलम्पटः तम् । एतादृशं नृपं राजानं सम्यक् संरक्षिताः पालिताः प्रजाः प्रकृतयः कोशैः अर्थौघैः वर्धयंति अतस्तथा भाव्यमिति विधिर्ध्वनितः ॥ ३४ ॥

नोच्चैरिति । प्रशस्ता गुणा यस्य स गुण्यः 'रूपादाहतप्रशंसयोर्यप्' इति सूत्रे 'अन्येभ्योऽपि दृश्यते' इति वार्तिकेन प्रशंसायां यप्प्रत्ययः । एतादृशोऽपि अन्वयेन वंशेन वर्जितः रहितः, अकुलीन इत्यर्थः । उच्चैः पदं महत्पदं न लम्भनीयः न प्रापणीयः, न नियोक्तव्य इति यावत् । रत्नैराढ्यं युक्तं एतादृशमपि पादयोः मंडनं भूषणं मूर्ध्नि मस्तके कः कुर्वीत । अर्थान्तरन्यासालङ्कारः ॥ ३५ ॥

मूर्खो वर्ज्यः कुलीनोऽपि मातङ्ग इव भूभुजा ।
गुणैः कैरप्यविख्यातो वंशेनैव विभावितः ॥ ३६ ॥
तद्युक्तमुपधाशुद्धमन्वयेन गुणेन च ।
साचिव्यं लम्भयन् मौलं न प्रमाद्यति भूपतिः ॥ ३७ ॥
यस्मिन् कृत्यानुरोधेन सौहृदं वितनोति यः ।
स तं त्यजति कृत्यान्ते तीर्णतोय इव प्लवम् ॥ ३८ ॥
यौ तु निष्कारणामुक्तस्नेहपाशौ सुहृत्तरौ ।
मृत्युनैव तयोर्भेदो देहजीवितयोरिव ॥ ३९ ॥
दण्डद्रविणदुर्गैकसङ्गी रक्षति भूपतिः ।
आत्मानमेव सततं किमु रक्षत्यसौ जगत् ॥ ४० ॥

---

गुणवर्जितः कुलीनोऽपि न युक इत्याह—मूर्ख इति । भुज भुक्ते इति भूभुक् तेन भूभुजा । भूशब्दे उपपदे भुजधातोः क्विप् । तेन राज्ञा वंशेनैव कुलेनैव विभावितः प्रसिद्धः तैरपि गुणैः अविख्यातः अप्रसिद्धः । अतएव मूर्खः बालिशः कुलीनोऽपि सद्वंश्योऽपि मातंग इव चण्डाल इव 'मातंगः श्वपचे गजे' इति मेदिनी । वर्ज्यः परिहर्तव्यः ॥ उपमालङ्कारः ॥ ३६ ॥

तदिति । उपधा धर्मार्थकामाद्युपन्यासेन अमात्यपरीक्षणम् । यथा—'चितावनः कथा चक्रुरुपधाभेदभीरवः' इति भट्टिः । तया शुद्धं अन्वयेन सद्वंशेन युक्त च गुणेन गुणैः । जात्येकवचनम् । युक्त मौलं आप्तसचिवं सचिवस्य भावः साचिव्यम् । ब्राह्मणादित्वात् ष्यञ्प्रत्ययः । लंभयन् प्रापयन् भूपतिः राजा न प्रमाद्यति । अवहितो भवतीत्यर्थः । मद्धातोर्दिवादित्वात् श्यनि 'शमामष्टाना दीर्घः श्यनि' इति दीर्घः ॥ ३७ ॥

यस्मिन्निति । यः यस्मिन् पुरुषविषये कृत्यस्य अनुरोधेन आनुगुण्येन कार्यार्थमित्यर्थः । सौहृदं प्रेम वितनोति करोति । तीर्णं तोयं उदकं येन स तीर्णतोयः पुरुषः प्लवमिव उडुपमिव सः कृत्यस्य कार्यस्य अन्ते तं पुरुषं त्यजति ॥ उपमालङ्कारः ॥ ३८ ॥

उक्तवैपरीत्येनाह—याविति । निष्कारणः निर्निमित्तः आमुक्तः स्नेहपाशो याभ्यां एतादृशौ यौ तु सुहृत्तरौ । तुशब्दः पूर्ववैलक्षण्यद्योतनार्थः । देहश्च जीवितं च देहजीविते तयोरिव तयोः पूर्वोक्तसुहृदोः भेदः मृत्युनैव मरणेनैव ॥ उपमालङ्कारः ॥ ३९ ॥

दण्डेति । दण्डः चतुर्थोपायः द्रविणं द्रव्यं दुर्गं च एषां एकः मुख्यः सङ्गः संबंधः सोऽस्यास्तीति 'अत इनिठनौ' इति इनिप्रत्ययः । एतादृशो भूपतिः राजा सततं आत्मानमेव न रक्षति किमु किन्तु इत्यर्थः । असौ राजा जगत् रक्षति । 'आत्मानमेव सततं' इत्यत्र 'नात्मानमेव सततं' इति पाठः ॥ ४० ॥

इति प्रकृतिवर्गादिनिर्णयेषु नयाश्रयः ।
क्षपितान्तर्बहिःशत्रुः शाधि साधु वसुन्धराम् ॥ ४१ ॥
इत्थंवादिनि राजेन्द्रे रामो मौनमधिश्रितः ।
ववर्ष हृदयं बाष्पैः शोकेन हृदयाविधा ॥ ४२ ॥
ततो वज्रासने भद्रं स निधाय निधिः श्रियः ।
निर्भरीकृतसम्भारः प्राभिषिको महीपतिः ॥ ४३ ॥
रुरुधे पृष्ठसंविष्टग्रन्थिमन्थरया तया ।
स्मारयित्वा वरौ वीरं राज्यं मन्थरया तया ॥ ४४ ॥
आदिदेश ततो वस्तुं वनेषु वनजेक्षणम् ।
चतुर्दश दशग्रीवशत्रुमिन्द्रसमः समाः ॥ ४५ ॥

---

अनुशिष्टिं उपसंहरति—इतीति । इति पूर्वोक्तप्रकारेण प्रकृतीनां प्रजानां वर्गः समूहः आदिर्येषां तेषां निर्णयेषु । प्रजारक्षणादिनिर्णयेष्वित्यर्थः । नयः नीतिः आश्रयो यस्य क्षपिताः नाशिताः अन्तःशत्रवः कामादयः बहिःशत्रवश्च येन एतादृशः सन् वसुंधरां पृथ्वीं साधु यथा स्यात्तथा शाधि दुष्टनिग्रहशिष्टानुग्रहपूर्वकं पालय । शासु अनुशिष्टौ लोट् ॥ ४१ ॥

इत्थमिति । राजेन्द्रे दशरथे इत्थं अभीक्ष्णं वदतीति इत्थंवादी तस्मिन् सति मौनं अधिश्रितः आश्रितः रामः हृदयं विध्यति ताडयति इति हृदयावित् 'नहिवृतिवृषि–' इत्यादिना पूर्वपदस्य दीर्घः । तेन शोकेन हेतुना बाष्पैः नेत्रोदकैः हृदयं उरः ववर्ष सिषेच । सिचूधातोर्लिट् ॥ ४२ ॥

तत इति । ततः पूर्वोक्तभाषणानन्तरं श्रियः लक्ष्म्याः निधिः शेवधिः निर्भरीकृताः एकत्रकृता इत्यर्थः । सम्भाराः अभिषेकसम्भारा येन एतादृशः । मह्याः पृथ्व्याः पतिः स दशरथः वज्राणां हीरकाणां आसनं वज्रासनं 'वज्रोऽस्त्री हीरके पवौ' इत्यमरः । भद्रं मंगलकारकं अथवा भद्रं रामभद्रम् । भीमसेनवत् निर्देशः । निधाय उपवेश्य प्राभिषिकः अभिषेकारंभं कृतवान् इत्यर्थः । 'आदिकर्मणि निष्ठा वक्तव्या' इति आदिकर्मणि क्तः । स च 'आदिकर्मणि क्तः कर्तरि च' इति कर्तरि । अनुप्रासालंकारः ॥ ४३ ॥

रुरुधे इति । पृष्ठे पृष्ठभागे संविष्टः संलग्नः यो ग्रन्थिः मांसग्रन्थिविशेषः तेन मन्थरं मन्दं यथा स्यात्तथा गमनं यस्याः एतादृश्या तया प्रसिद्धया मंथरया वीरं दशरथं प्रति वरौ निधिभूतौ स्मारयित्वा राज्यं रुरुधे । रामस्य राज्यप्राप्तिर्विघ्नितेत्यर्थः । अत्र रामराज्यविघ्नस्य कैकेय्याः कर्तृत्वेपि मंथरया कैकेय्याः प्रवर्तितत्वात् मंथरायाः कर्तृत्वं बोध्यं तेन रामायणेन न विरोधः ॥ ४४ ॥

आदिदेशेति । ततः मन्थराकर्तृकविघ्नानन्तरं इन्द्रेण समबलः समः तुल्यः दशरथः वनजे कमले इव ईक्षणे नेत्रे यस्य एतादृशं दश ग्रीवाः कंठा यस्य स दशग्रीवो रावणः तस्य शत्रुः रामः तम् । भाविवृत्ताभिप्रायेणेदं दशग्रीवशत्रुत्वं पूर्वकन्याभिप्रायेण वा । चतुर्दश समाः वर्षाणि 'हायनोऽस्त्री शरत्समाः' इत्यमरः । वनेषु अरण्येषु वस्तुं आदिदेश आज्ञापयामास ॥ ४५ ॥

अनिन्द्यजानिनाऽऽरूढो निर्जगाम रथः पुरः ।
कृतप्रस्थानसौमित्रिः स्फुरत्केतुरथो पुरः ॥ ४६ ॥
अश्रुभिर्हृदयं सीता निजमेव न केवलम् ।
चकारार्द्रं जनस्यापि प्रेक्षितस्य वनाध्वनि ॥ ४७ ॥
जगन्नेत्राभिरामस्य रामस्य रहितागसः ।
शक्रस्य त्यागिनं देवं घृणयेवासवो जहुः ॥ ४८ ॥
न्यवर्तत परित्यज्य क्षत्ताऽथ क्षत्रियत्रयम् ।
ऊढाश्रु वलितग्रीवं चिरं तेनैव वीक्षितः ॥ ४९ ॥
द्वित्राण्येव रथं त्यक्त्वा पदान्याधाय निस्सहा ।
येयमस्त्यस्ति कियद्दूरमिति पप्रच्छ मैथिली ॥ ५० ॥

---

अनिन्द्येति । अथो दशरथाज्ञानन्तरं अनिन्द्या जाया यस्य स अनिन्द्यजानिः रामचन्द्रः ' जायाया निङ् ' इति समासान्तो निङादेशः । तेन । अनेन सीतायाः पतिव्रतत्वात् सीतापि रामेण साकं गता इति गम्यते । आरूढः अधिष्ठितः । स्फुरतीति स्फुरन् एतादृशः केतुः ध्वजो यस्य । पुरः अग्रतः कृत प्रस्थानं येन एतादृशः सौमित्रिः लक्ष्मणो यस्य । गुरुकुलवत् नित्यसापेक्षत्वात् समासः । एतादृशो रथः पुरः अयोध्यापुर्याः सकाशात् ' पूः स्त्री पुरी नगर्यौ वा ' इत्यमरः । निर्जगाम ॥ ४६ ॥

अश्रुभिरिति । सीता जानकी वनस्य अरण्यस्य अध्वा मार्गः तस्मिन् अश्रुभिः नेत्रोदकैः केवलं निजमेव आत्मीयमेव हृदयं आर्द्रं न चकार किंतु प्रकृष्टं ईक्षितं अवलोकनं यस्य स प्रेक्षितः तस्य प्रेक्षकस्येत्यर्थः । जनस्यापि हृदयं आर्द्रं चकार ॥ ४७ ॥

जगदिति । जगतः नेत्रयोः अभिरामः मनोहरः तस्य । रहितं आगः अपराधो यस्य । निरपराधस्येत्यर्थः । शक्रस्य प्रियवदस्य ' शक्रः प्रियंवदे ' इत्यमरः । एतादृशस्य रामस्य त्यागिनं ' सम्पृच ' इत्यादिना । त्यज्धातोर्घिनुण् प्रत्ययः ' त्यजोः ' इति घित्वात् कुत्वम् । देवं दशरथं असवः प्राणाः घृणयेव जुगुप्सयेव ' जुगुप्साकरुणे घृणे ' इत्यमरः । जहुः तत्यजुः । ओहाक् त्यागे लिट् ॥ ४८ ॥

न्यवर्ततेति । अथ रामस्य अरण्यगमनानन्तरं क्षत्ता सारथिः सुमित्रः क्षत्रियौ च क्षत्रिया च क्षत्रियाः । ' पुमान् स्त्रिया ' इत्येकशेषः । तेषां त्रय त्रितयं परित्यज्य हित्वा ऊढानि अश्रूणि यस्मिन् वलिता वक्रीकृता ग्रीवा यस्मिन् तत् वलितग्रीवम् । वीक्षणक्रियाया विशेषणमिदम् । अश्रुदृष्ट्या वक्रग्रीवया चेत्यर्थः । तेनैव क्षत्रियत्रयेणैव चिरं चिरकालं वीक्षितः सन् अवलोकितः सन् न्यवर्तत निवृत्त इत्यर्थः ॥ ४९ ॥

द्वित्राण्येवेति । मैथिली जानकी रथं त्यक्त्वा हित्वा द्वे वा त्रीणि वा द्वित्राणि एव ' सङ्ख्ययाव्ययासन्ना–' इति बहुव्रीहिः । पदानि आधाय स्थाप-

रामहस्तस्थशाखाग्रकल्पितातपवारणम् ।
प्रस्थानमभवत्तस्यास्तदग्रेसरलक्ष्मणम् ॥ ५१ ॥
इक्षुशाकटशालेयक्षेत्रानुत्तरकोशलान् ।
ययुर्भागीरथीतीरं पश्यन्तः सोत्पलाम्भसः ॥ ५२ ॥
अथानासाद्य कालिन्दीमुल्लङ्घ्य सरितं दिवः ।
भारद्वाजाश्रमं पुण्यं चित्रकूटस्य चाध्वनः ॥ ५३ ॥
चिह्नं नदनदीदेशैरुक्त्वा वृक्षक्षमाधरैः ।
राजन्यभोगिने याते राघवोऽपि गुहे गृहम् ॥ ५४ ॥
सपत्न्यो सरितां पत्युः सुमित्रात्मजधीवरैः ।
चित्रकूटमकूटज्ञः प्रीतः प्रोत्तारितो ययौ ॥ ५५ ॥

---

यित्वा निःसहा क्षमासहिष्णुः सती या इव गता पृथ्वीत्यर्थः । अन्यत् कियत् क्रियमाणं दूरं वर्तते इति पप्रच्छ । प्रच्छ ज्ञीप्सायां लिट् ॥ ५० ॥

रामेति । रामस्य हस्तः करः तत्र तिष्ठतीति रामहस्तस्थं एतादृशं यत् शाखाग्रं तेन कल्पितं कृतं आतपवारणं यस्मिन् । तस्याः सीताया अग्रेसरः 'पुरोग्रतोऽग्रेषु सर्तेः' इति टप्रत्ययः । लक्ष्मणो यस्मिन् एतादृशं तस्याः सीतायाः प्रस्थानं गमनं अभवत् ॥ ५१ ॥

इक्ष्विति । इक्षूणां भवनं क्षेत्रं इक्षुशाकटं 'भवने क्षेत्रे शाकटशाकिनौ' इति शाकटप्रत्ययः । शालीनां भवनं क्षेत्रं शालेयं इक्षुशाकटानि शालेयानि च क्षेत्राणि येषु एतादृशान् उत्पलैः कमलैः सहितानि सोत्पलानि तथा अंभांसि येषु एतादृशान् उत्तरकोसलान् पश्यतः अवलोकयतः भागीरथ्याः विष्णुपद्याः तीरं ययुः प्राप्ताः ॥ ५२ ॥

अथ विशेषकेनाह-अथेति । अथ भागीरथीतीरप्राप्त्यनन्तरं कालिन्दीं यमुनां अनासाद्य अप्राप्य 'परावरयोगे च' इति क्त्वाप्रत्ययः । यमुनायाः परतः सत्यां पूर्वमित्यर्थः । दिवः स्वर्गस्य सरितं भागीरथीं उल्लङ्घ्य पुण्यं भारद्वाजस्य ऋषेराश्रमम् । अत्रापि 'परावरयोगे च' इति क्त्वाप्रत्ययः । उक्त्वा च चित्रकूटपर्वतस्य अध्वनः मार्गस्य नदाश्च नद्यश्च देशाश्च नदनदीदेशाः तैः । वृक्षाः महीरुहाः क्षमाधराः पर्वताः तैश्च हेतुभिः चिह्नं लक्षणं 'चिह्नं लक्ष्म च लक्षणं' इति कोशः । यत्र नदाः नद्यः देशाः वृक्षाः पर्वताश्च वर्तन्ते स चित्रकूटाख्या इत्येवं लक्षणमुक्त्वेत्यर्थः । राजन्यान् क्षत्रियान् भोजयति पालयति ते राजन्यभोगिनः । राजन्यशब्दोपपदे भुजधातोः णिनिः । राजन्यभोगी इनः प्रभुः तस्मिन् । क्षत्रियसत्कारकर्तॄणां मध्ये श्रेष्ठे इत्यर्थः । गुहे एतन्नाम्नि निषादाधिपतौ गृहं याते सति । कूटं कपटं जानातीति कूटज्ञः तथा न भवतीति अकूटज्ञः, ऋजुचित्त इत्यर्थः । राघवोऽपि रामचन्द्रोऽपि सरितां नदीनां पत्युः स्वामिनः समुद्रस्य सपत्न्यौ भागीरथीकालिन्द्यौ इत्यर्थः । सुमित्रायाः आत्मजः लक्ष्मणः धीवराः दाशाः 'कैवर्ते दाशधीवरौ' इत्यमरः । तैः प्रोत्तारितः अतएव प्रीतः सन् चित्रकूटं एतन्नामकपर्वतं ययौ ॥ ५३ ॥ ५४ ॥ ५५ ॥

ततः सीतामुखाम्भोजभ्रमरत्वे कृतस्पृहम् ।
नष्टैकदृष्टिमस्त्रेण बलिपुष्टं चकार सः ॥ ५६ ॥
ततः प्रतीकसङ्काशो धीरः केकयवंशजः ।
बिभ्रच्छोकद्विगुणितं श्रमं रामाश्रमं ययौ ॥ ५७ ॥
राजघो निर्घृणः कश्चित् सम्प्राप्त इति साधवे ।
कथ्यतामिति तद्वाक्यं द्वारि शुश्राव राघवः ॥ ५८ ॥
अनुज्ञातोऽनुजस्तेन पर्णशालामथाविशत् ।
द्वारबन्धातिरिक्तेन किञ्चित्तिर्यक्कृतोरसा ॥ ५९ ॥
भरतः शोकसन्तप्तो राममादाय पादयोः ।
आर्येत्युक्त्वा सकृद्दीनः पुनर्नोवाच किञ्चन ॥ ६० ॥

---

तत इति । ततः चित्रकूटगमनानन्तरं सः रामचन्द्रः सीतायाः मुखं वदनं तदेव अम्भोजं कमलं तस्य भ्रमर इव सीतामुखाम्भोजभ्रमरः तस्य भावः तत्त्वं तस्मिन् कृता स्पृहा इच्छा येन तं कृतस्पृहम् । भ्रमरो यथा कमलस्य मकरन्दं गृह्णाति एवं सीतामुखास्वादलोलुपमित्यर्थः । बलिपुष्टं बलिना पुष्टः तं काकं अस्त्रेण नष्टा एकदृष्टिर्यस्य स नष्टैकदृष्टिः एतादृशं चकार ॥ ५६ ॥

तत इति । ततः काकदृष्टिव्यधानन्तरं प्रतीकात् प्रतिकूलात् संहति इति प्रतीकसङ्काशः 'कर्मणि समि च' इत्यनेन अण्प्रत्यये नकारस्य टादेशश्च । अतएव धीरः शोकेन पितृवियोगशोकेन रामविवासशोकेन च द्विगुणितं श्रमं अध्वश्रमं बिभ्रत् धारयन् केकयवंशे अजनीति केकयवंशजः 'सप्तम्यां जनेर्डः' इति डः । भरतः रामस्य आश्रमं रामाश्रमं ययौ ॥ ५७ ॥

राजघ इति । राजानं दशरथाख्यं हन्तीति राजघः एतद्राज्यलाभनिमित्तं रामस्य विवासनात् दशरथमरणात् भरतस्य परम्परया दशरथमरणकारणत्वात् भरतो राजघः । राघव इति पाठस्तु साधीयान् । कश्चित् निर्घृणः निर्दयः राघवः रघुकुलोत्पन्नः सम्प्राप्तः इति साधवे सत्पुरुषाय रामाय कथ्यतां इति एवं प्रकारेण तस्य भरतस्य वाक्यं राघवः रामचन्द्रः द्वारि शुश्राव । स्वस्य पापत्वात् निजनाम्ना अनिर्देशः पापी चेत् रामो न पश्येत् इति बुद्ध्या राघव इति समुक्तम् । रघुकुलोत्पन्नत्वात् तत्सम्बन्धेन रामः पश्येदित्यर्थः ॥ ५८ ॥

अनुज्ञात इति । अथ भरतवाक्यश्रवणानन्तरं द्वारस्य यो बन्धः बन्धनं तस्मात् अतिरिक्तेन पृथग्भूतेन । रिचिर् पृथग्भावे अतिपूर्वः रिच् धातोः गत्यर्थाकर्मकेति कर्तरि क्तः । अतएव किञ्चित् स्वल्पं तिर्यक्कृतं उरो येन । द्वारस्थितो रामचन्द्रः तत्प्रवेशावकाशदानार्थं किञ्चित् अन्यत्र स्थित इत्यर्थः । तेन रामचन्द्रेण अनुज्ञातः कृतानुज्ञः अनुजः भरतः पर्णशालां उटजं 'पर्णशालोटजोऽस्त्रियाम्' इति कोशः । आविशत् ॥ ५९ ॥

भरत इति । शोकेन सन्तप्तः अतएव दीनः भरतः रामं पादयोः चरणयोः आदाय गृहीत्वा 'अपे क्लेशः कषिसंयोगी' इतिवत् पादयोरिति सप्तमी । पादग्र-

ततः श्रुत्वा गुरोरन्तं स दुःखेन हृदिस्पृशा ।
साभिषेकमिवास्रेण चक्रे कर्मौर्ध्वदेहिकम् ॥ ६१ ॥
शपमानामथ स्वस्मै कैकेयीं भूतिनिस्पृहाम् ।
गर्हन्तं भरतं वक्तुं रामश्चापि प्रचक्रमे ॥ ६२ ॥
न स्मरामि गुरोराज्ञां ज्ञात्वा जातु विलंघिताम् ॥
न सदृक्षं हि नो हन्तुं तातस्य समयं यतः ॥ ६३ ॥
समयश्चास्य गुरोरिन्द्रलोकस्थस्य विलंघने ।
बुद्धिं च निर्विशङ्कैवं पुनर्माजनि तावकी ॥ ६४ ॥
पूजनीया च ते देवी पत्युः सत्यानुपालिनी ।
नृपयिष्यति पूज्येषु पूजावैमुख्यमायतिम् ॥ ६५ ॥

---

च्छदनेत्यर्थः । आर्य ! इति सकृत् उक्त्वा पुनः किंचन नोवाच । शोकेन कण्ठस्य अवरुद्धत्वात् पुनः किमपि वक्तुं न शशाकेत्यर्थः ॥ ६० ॥

तत इति । सः रामचन्द्रः ततः तस्मात् भरतात् गुरोः दशरथस्य अन्तं मरणं 'अन्तो नाशो द्वयोर्मृत्युः' इत्यमरः । श्रुत्वा हृदि स्पृशतीति हृदिस्पृक् तेन हृदिस्पृशा 'स्पृशोऽनुदके क्विन्' इति क्विन् । उपपदसमासः 'हृद्द्युभ्यां च' इति सप्तम्या अलुक् । दुःखेन हृदिस्पृशेति अस्रविशेषणं वा । अस्रेण अश्रुणा अभिषेकेण सहितं साभिषेकं एतादृशमिव और्ध्वदेहिकं कर्म चक्रे ॥ ६१ ॥

शपमानामिति । अथ स्वस्मै आत्मने शपतेऽसौ शपमाना तां भूतौ ऐश्वर्ये निस्पृहां निरिच्छां केकयस्य राज्ञः दुहिता कन्या कैकेयी 'जनपद' इति अणि 'केकयमित्रयुप्रलयानां यादेरियः' इति इयादेशः । अणन्तत्वात् ङीप् । तां गर्हन्तं निन्दन्तं भरतं वक्तुं रामोऽपि प्रचक्रमे । अपिर्वाक्यालङ्कारे ॥ ६२ ॥

रामः मोक्तुं प्रचक्रमे इत्युक्तं किं तत् इत्यपेक्षायामाह—नेति समयस्येति च । गुरोः आज्ञां ज्ञात्वा जातु कदाचित् विलंघितां उल्लंघितां न स्मरामि । यतः तातस्य दशरथस्य समयं प्रतिज्ञामित्यर्थः । 'समयाः शपथाचारकालसिद्धांतसंविदः' इत्यमरः । हन्तुं नाशयितुं उल्लंघयितुमिति यावत् । नः अस्माकं सदृशं योग्यं न हि । अतः इन्द्रलोके स्वर्गे तिष्ठतीति इन्द्रलोकस्थः तस्य स्वर्गस्थस्य । गुरोः दशरथस्य समयस्य प्रतिज्ञायाः विलंघने उल्लंघने तव इयं तावकी 'तवकममकावेकवचने' इत्यनेन अणि तवकादेशः अणन्तत्वात् ङीप् । निर्गता विशङ्का यस्याः सा निर्विशङ्का एतादृशी बुद्धिः एवं पुनः माजनि पुनः माभूत् । मदागमनार्थं आग्रहं करोषि तेन तातप्रतिज्ञायाः भंगः स्यात् अतः तत्प्रतिज्ञाभंगाभावार्थं पुनर्मैवं वोच इत्यर्थः ॥ ६३ ॥ ६४ ॥

कैकेयीमपि मानिंदीत्याह—पूजनीयेति । ते त्वया पत्युः दशरथस्य सत्यं प्रतिज्ञासत्यत्वं अनुपालयति रक्षतीति सत्यानुपालिनी 'सुप्यजातौ' इति णिनिः । देवी कैकेयी पूजनीया च माननीया इत्यर्थः । एतन्निमित्तं रामवियोग

स्वयं कृतेन दोषेण येन यो लज्जते गुरुः ।
तेन तत्संनिधौ तद्वानन्योऽपि न च निन्द्यताम् ॥ ६६ ॥
इति व्याहृत्य नम्राय ददौ दीनाय पादुके ।
घर्मे मर्माविधि मरौ वारि वारीष्यते यथा ॥ ६७ ॥
द्विधाकारमिव ज्यायान् भरतं हृदयं चिरम् ।
दर्शयन्तं परिष्वङ्गप्राप्तसान्त्वं व्यसर्जयत् ॥ ६८ ॥
ततस्तं त्यजता शैलं विराधो रावणारिणा ।
दृष्टस्तनूनपादर्चिर्बभ्रुः पञ्चवटीपथे ॥ ६९ ॥

---

इति तां मा तिरस्कार्षीरित्यर्थः । तदेव द्रढयति—दूषयिष्यतीति । पूज्येषु मान्येषु पूजायां वैमुख्यं विमुखत्वं आपत्तिं उत्तरकाले दूषयिष्यति । मान्यानां तिरस्कारे भाविकालः समीचीनो नायाति इति तात्पर्यम् ॥ ६५ ॥

सा साक्षात् नैव निन्दनीया यथाप्राप्तत्वात् इति कैमुतिकन्यायेनाह—स्वयमिति । यः गुरुः मान्यः स्वयं कृतेन येन दोषेण लज्जते तेन दोषेण तत्संनिधौ गुर्वादिमान्यसंनिधौ तद्वान् तादृशदोषकर्ता अन्योऽपि गुर्वादिभिन्नोऽपि न च निन्द्यताम् । तादृशदोषवतोऽन्यस्य निन्दाकरणेऽपि संनिहितस्य तद्दोषवतो गुर्वादेर्मान्यस्य लज्जा भवति किमुत साक्षान्निन्दाकरणे इत्यर्थः ॥ ६६ ॥

इतीति । इति पूर्वोक्तप्रकारेण व्याहृत्य उक्त्वा मर्म विध्यति ताडयतीति मर्माविधि । मर्मशब्दोपपदे व्यधधातोः क्विप् । संप्रसारणं 'नहिवृतिवृषिव्यधि-' इत्यादिना पूर्वपदस्य दीर्घः । घर्मे उष्णकाले मरौ मरुदेशे यथा 'वारि वारि उदकं उदकं' इति इष्यते दूयते च जनैरिति शेषः । 'वारि' इत्यत्र वीप्सायां द्विर्वचनम् । तद्वत् दीनाय अतएव नम्राय नताय भरताय इति अर्थात् लभ्यते । पादुके ददौ ॥ अनुप्रासालङ्कारः ॥ ६७ ॥

द्विधाकारमिति । ज्यायान् ज्येष्ठः रामचन्द्र इत्यर्थः । हृदयं द्विधाकारं इव द्विधाभूतमिवेत्यर्थः । हृदयं चिरं चिरकालं दर्शयन्तम् । रामवियोगात् हृदयं द्विधेव भवतीति चेष्टाभिः दर्शयन्तमित्यर्थः । भरतं परिष्वङ्गेण आलिङ्गनेन प्राप्तं लब्धं सान्त्वं येन एतादृशं व्यसर्जयत् । अयोध्यां प्रति गन्तुमित्यर्थः ॥ ६८ ॥

तत इति । ततः भरतप्रेषणानन्तरं तं पूर्वोक्तं शैलं चित्रकूटं त्यजता त्यक्तवता रावणस्य अरिः शत्रुः रामः । भाविवृत्तान्ताभिप्रायेण विशेषणमिदम् । तेन रामेण पञ्चवट्याः पथा, पञ्चवटीपथः 'ऋक्पूरब्धूःपथामानक्षे' इत्यनेन समासान्तः अप्रत्ययः । तस्मिन् तनूं देहं न पातयति इति तनूनपात् अग्निः । जठराग्निना । देहो ध्रियते इति सुप्रसिद्धम् 'नभ्राण्नपात्' इत्यादिना साधुः । 'जातवेदास्तनूनपात्' इत्यमरः । तद्वत् अर्चिः कान्तिर्यस्य अतएव बभ्रुः पिंगलवर्णः 'बभ्रू नकुलपिंगलौ' इत्यभिधानात् । विराधः एतन्नामा राक्षसः दृष्टः अवलोकितः ॥ ६९ ॥

हरन्तमथ वैदेहीं विनिहत्य निशाचरम् ।
भविष्यदिव संक्षिप्य कथाया वस्त्वदर्शयत् ॥ ७० ॥
पञ्चवट्याश्रमे रम्ये रङ्कत्सारङ्गशावकैः ।
वृतेऽथ ववृते तस्य वासो वासववर्चसः ॥ ७१ ॥
अथ रामं वृषस्यन्ती प्रपेदे नैकसीसुता ।
इच चिन्ता दरिद्रस्य स्थूललक्ष्यं नरेश्वरम् ॥ ७२ ॥
चकर्त्त नासिकां क्रुद्धः सीताविद्रवणादथ ।
लक्ष्मणस्तन्मुखाम्भोजकर्णिकां कृपया समम् ॥ ७३ ॥
भ्रातृद्वये तदाहूते क्षुरप्रप्रकरं बलम् ।
शस्त्रैर्धर्षयति क्षिप्रमपावारिष्टराघवौ ॥ ७४ ॥

---

हरन्तमिति । अथ निशाचरदर्शनानन्तरं वैदेहीं जानकीं हरन्तं नयन्तं निशायां चरतीति निशाचरः राक्षसः तम् । 'चरेष्टः' इति अधिकरणे उपपदे टप्रत्ययः । विनिहत्य हत्वा भविष्यत् भावि कथायाः वस्तु संक्षिप्येव संक्षेपं कृत्वेव अदर्शयत् । सीतामपहरन्तं रावणं हनिष्यामि इति भाविनं विस्तीर्णं वृत्तान्तं तत्तुल्यं आचरितुरेतस्य राक्षसस्य वधेन संक्षेपेण प्रदर्शितवान् इत्यर्थः॥ उत्प्रेक्षालङ्कारः ॥ ७० ॥

पञ्चवट्याश्रम इति । अथ विराधवधानन्तरं रङ्गतः इतस्ततो भ्रमतः ये सारङ्गशावकाः मृगशिशवः तैः वृते वेष्टिते अतएव रम्ये मनोहरे पञ्चवट्याः समधी यः आश्रमः तस्मिन् वासवः इन्द्रः तद्वत् वर्चः तेजो यस्य एतादृशस्य तस्य रामस्य वासः वसतिः ववृते वर्ततेस्म ॥ अनुप्रासालङ्कारः ॥ ७१ ॥

अथेति । अथ पञ्चवटीवासानन्तरं दरिद्रस्य चिन्ता स्थूललक्ष्यं दानशौण्डं 'स्युर्वदान्यः स्थूललक्ष्यदानशौण्डाबहुप्रदे' इत्यमरः । नरेश्वरं राजानमिव वृषस्यन्ती मैथुनेच्छावती । रूढ. शब्दोऽयं यद्यपि 'अश्ववृषयोर्मैथुनेच्छायाम्' इति उक्तं तथापि 'वृषस्यन्ती तु कामुकी' इत्यमरात् अन्यत्रापि प्रयोगे बाधकाभावात् । नैकस्याः एतन्नामकराक्षस्याः सुता कन्या शूर्पणखा रामं प्रपेदे । पद् गतौ लिट् एत्वाभ्यासलोपौ ॥ ७२ ॥

चकर्तेति । अथ शूर्पणखाया रामसन्निधिप्राप्त्यनन्तरं सीतायाः जानक्याः विद्रवणात् पलायनात् । भयङ्करतद्रूपदर्शनेन सीतायाः पलायनमित्यर्थः । क्रुद्धः लक्ष्मणः सौमित्रिः तस्याः शूर्पणखायाः मुखमेव अम्भोजं कमलं तस्य कर्णिकां पद्मबीजकोशीं 'कर्णिका कर्णभूषणे ॥ करिहस्तेऽङ्गुलौ पद्मबीजकोश्यां त्रिषूत्तरे' इत्यमरः । एतादृशीं नासिकां कृपया दयया समं चकर्त चिच्छेद ॥ रूपकसहोक्त्यलङ्कारौ ॥ ७३ ॥

भ्रातृद्वये इति । तया शूर्पणखया आहूते आकारिते एतादृशे भ्रात्रोः द्वये तस्मिन् शरैः. धर्षयति सति शस्त्रवर्षणं कुर्वति सतीत्यर्थः । क्षुरप्राणां क्षुरतु-

अदीधपत गृध्राणां व्रातमेकधनुर्धरः ।
सत्यव्रतोऽसृजो धारां खरदूषणयोर्युधि ॥ ७५ ॥
दम्भाजीविकमुत्तुङ्गजटामण्डितमस्तकम् ।
कञ्चिन्मस्करिणं सीता ददर्शाश्रममागतम् ॥ ७६ ॥
मृगव्याहृतराजन्यो वर्णलिङ्गी निशाचरः ।
उग्ररूपो निजं घोरं रूपं प्रादुरबीभवत् ॥ ७७ ॥
दशानामस्य शिरसामुग्रतेजस्कमाश्रयम् ।
पश्यन्ती मैथिली भीत्या रूपधेयमकम्पत ॥ ७८ ॥
प्रदीपमिव तं द्रष्टुं नात्यासन्नं शशाक सा ।
असोढमरुतं तेजःपरिस्फुरदशाननम् ॥ ७९ ॥

---

त्यबाणानां प्रकरः समूहः यस्य अथवा क्षुरप्रान् प्रकरोति वर्षति तत् क्षुरप्रकरं एतादृशं बलं राक्षससैन्यं कर्तृ । राघवौ रामलक्ष्मणौ कर्म । क्षिप्रं शीघ्रं अपावरिट अवेष्टत् 'वृञ् वरणे' अस्मात् अपपूर्वकात् लुङ् ॥ ७४ ॥

अदीधपतेति । सत्यमेव व्रतं यस्य एतादृशः एकः अद्वितीयः स चासौ धनुर्धरश्च रामचन्द्र युधि संग्रामे खरदूषणयोः एतन्नामकराक्षसयोः असृजः रक्तस्य धारां गृध्राणां व्रातं समूहं अदीधपत अपीप्यत् । धेट् पाने णिजन्तात् लुङ् ॥७५॥

दम्भेति । सीता जानकी दम्भः आजीविका जीवनसाधनं यस्य 'आजीवो जीविका वार्ता' इत्यमरः । उत्तुङ्गा अत्युच्चाः या जटाः ताभिः मण्डितं भूषितं मस्तकं यस्य एतादृशं आश्रमं आगतं प्राप्तं कञ्चित् मस्करिणं परिव्राजकं 'मस्करमस्करिणौ वेणुपरिव्राजकयोः' इति निपातनात् साधु । ददर्श ॥ ७६ ॥

मृगेति । मृगेण मृगरूपिमारीचेन प्रयोजककर्त्रा व्याहृतौ भ्रामितौ राजन्यौ रामलक्ष्मणौ येन । मृगनिमित्तं रामलक्ष्मणौ पर्णशालायाः बहिर्गतौ तत्र प्रयोजककर्ता रावण एवेति रामायणे प्रसिद्धम् । रावणाज्ञयैव मृगरूपं धृत्वा मारीचस्य तत्रागमनात् । वर्णः प्रशस्ति अष्टविधमैथुनाभावः सोऽस्यास्तीति वर्णी संन्यासी 'अत इनिठनौ' इति इनिः तस्य लिङ्गं चिह्नं तदस्यास्तीति वर्णिलिङ्गी सन्यासीरूपधारी । उग्रं भयंकरं रूपं यस्य स उग्ररूपः एतादृशः निशाचरः रावणः । निजं आत्मीयं 'स्वके नित्ये निजं त्रिषु' इत्यमरः । घोरं भयंकरं रूपं स्वरूपं प्रादुरबीभवत् प्रकटीचकारेत्यर्थः । भूधातोर्णिजन्तात् लुङ् ॥७७॥

दशानामिति । मैथिली सीता अस्य रावणस्य दशानां शिरसां आश्रयं आधारं अतएव उग्रं तेजो यस्य तत् उग्रतेजस्कं रूपं आकार एव रूपधेयं 'रूपमाकारसौन्दर्यमानकेष्वपि दृश्यते' इति त्रिकाण्डशेषः । 'भागरूपनामभ्यो धेयः' इति स्वार्थे धेयप्रत्ययः । तत् पश्यन्ती अवलोकयन्ती सती भीत्या भयेन अकम्पत । कपि चलने लङ् ॥ ७८ ॥

प्रदीपमिवेति । सा सीता । असोढः मरुतः देवा येन तम् । पक्षे असोढः मरुत् वायुर्येन एतादृशम् । तेजसा परिस्फुरन्ति भूषितानि दशसंख्याकानि

रामरत्नमसौ रामनामाक्रन्ददिदं वचः ।
जगाद जगदीशस्य क्षेपदुष्टं क्षपाचरः ॥ ८० ॥
सारङ्गाक्षि शरस्तस्य केवलं तु खरे खरः ।
दूषणे दूषणो भद्रे न त्रिलोक्या विभौ रणे ॥ ८१ ॥
लब्धाभया बलनिरीक्षणदौहृदेन
द्वारे स्थिता निजपुरप्रवरस्य सिद्धाः ।
दृष्टा मया सुरपुरं व्रजता कटाक्षै-
रैरावणद्विपगतेन सहासगर्वम् ॥ ८२ ॥

---

आननानि मुखानि यस्य । पक्षे तेजसा ज्योतिषा परिष्कृत शोभित दशाया वर्तिकायाः आनन अग्रभागो यस्य एतादृश प्रदीपमिव । नात्यासन्न किंचिद्दूरं सुप्सुपेति समासः । न रावण द्रष्टु न शशाक । शक्लृ शक्तौ लिट् ॥ ७९ ॥

रामेति । असौ क्षपाचर. राक्षसो रावण इत्यर्थ. । जगतः ईशस्य अधिपस्य राम इति नाम रामनाम तत् आक्रन्दतीति आक्रन्दत् । उच्चैः स्वरेण उच्चारयत् इत्यर्थः । एतादृश रामास्तु रत्न श्रेष्ठम् । 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः। सीतामित्यर्थः । क्षेपेण निन्दया दुष्ट एतादृश इद वक्ष्यमाण वचः भाषणं जगाद । अनुप्रासालंकारः ॥ ८० ॥

रावणः वचो जगावेत्युक्त तदेव निजभीतिरूप सीतालोभनार्थमाह—सारंगाक्षीति । सारंगः हरिणः तद्वत् अक्षिणी यस्याः सा सारंगाक्षी 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वांगात्षच्' इति समासांतः षच्प्रत्ययः षित्वात् ङीष् । हे सारंगाक्षि मृगनयने सीते । तस्य बुद्धिस्थस्य रामस्येत्यर्थ. । शरः बाणः केवल खरे खरनाम्नि राक्षसे खरः तीक्ष्णः । हे भद्रे हे कल्याणि । चाटूक्तित्वात् पुनः संबोधनम् । दूषणे दूषणनामके राक्षसे दूषणः शर इति संबध्यते रणे । त्रयाणां लोकानां समाहारः त्रिलोकी 'अकारांतोत्तरपदो द्विगुः स्त्रियामिष्टः' इति स्त्रीत्वे 'द्विगो.' इति ङीप् । त्रिलोक्याः त्रिभुवनस्य विभौ तु स्वामिनि मयि तु न । खरोपि न दूषणोऽपि नेत्यर्थ. । रामबाणेन खरदूषणयोर्वधेऽपि पराक्रमेण त्रिभुवनवशीकर्तरि मयि किं क्रियेत इति तात्पर्यम् । अनुप्रासालंकारः ॥ ८१ ॥

लब्धेति । बलस्य यन्निरीक्षण अवलोकन तस्य यद्दोहद इच्छा 'अथ दोहदम् ॥ इच्छा कांक्षा' इत्यमरः । तेन हेतुना निज आत्मीयं यत् पुरप्रवरं नगरश्रेष्ठं तस्य द्वारे स्थिताः लब्धं प्राप्त अभयं यै. । मत्त इति शेषः । एतादृशाः सिद्धा. देवयोनिविशेषाः ऐरावणो नाम द्विपः हस्ती त गतेन प्राप्तेन सुराणां देवानां पुर नगरं अमरावती व्रजता गच्छता मया रावणेन हासश्च गर्वश्च हासगर्वौ ताभ्यां सहित यथा स्यात्तथा कटाक्षैः अपांगदर्शनैः दृष्टाः अवलोकिताः । देवा अपि तुच्छत्वेन मया विलोक्यंते इतरेषां तु का कथा इति भाव । वसंततिलकं वृत्तम् । 'ज्ञेयं वसंततिलकं तभजा जगौ ग.' इति लक्षणात् ॥ ८२॥

अन्यायितोऽहमहमप्यनुसृत्य सेवां
निर्जीविको मम हृतं भवनं पिशाचैः ।
इत्युन्नदन् सुरगणः सह लोकपालै
राजाङ्गने भ्रमति मत्प्रतिहारमेत्य ॥ ८३ ॥
स्पष्टोत्पिष्टबृहत्त्रिविष्टपबलं बाहुं बहुक्षोभित-
क्ष्मापातालतलं तलेन दलितश्वेताचलेन्द्रं मम ।
नो वाञ्छत्युपधानमूनमबले धन्या सुरस्त्रीषु का
तल्पेऽनल्पविकल्पजल्पमधुरक्रीडारसे सेवितुम् ॥ ८४ ॥

---

अन्यायित इति । हे राजाङ्गने रामचन्द्राङ्गने सीते ! लोकान् पालयन्तीति लोकपालाः 'कर्मण्यण्' इति अण् । इन्द्रादिलोकपालैः सह सुराणां देवानां गणः समूहः कर्ता । मम प्रतिहारः द्वार मत्प्रतिहारः मदीयगृहद्वारमित्यर्थः । 'द्वारिद्वास्थे प्रतीहारः' इत्यमरः । अह अन्यायः अपराधः संजातोऽस्य अन्यायितः । तारकादित्वात् इतच्प्रत्ययः । एतादृशः अस्मि इति शेषः । निर्गता जीविका जीवनसाधन यस्य एतादृशः अहमपि सेवां भवदीयामित्यर्थः । अनुसृत्य तिष्ठामीति शेषः । मम भवन गृह पिशाचैः भूतैः हृत अपहृत इति उन्नदति वदति इति उन्नदन् उच्चैर्भाषमाणः सन् भ्रमति । सलोकपाला देवा अपि दैन्यं प्रकटयतः संतः मद्द्वारि भ्रमतीति तात्पर्यम् । एतेन स्वस्य सर्वेशितृत्व सूचितम् । वसन्ततिलकं वृत्तम् ॥ ८३ ॥

स्पष्टोत्पिष्टेति । हे अबले सीते अनल्पः बहुः विकल्पः यस्मिन् एतादृशो यो जल्पः भाषण । विविधप्रकारं भाषणमित्यर्थः । तेन मधुरः क्रीडारसो यस्मिन् । तल्पविशेषणमिदम् । अथवा अनल्पजल्पमधुरो यः क्रीडारसः तस्मिन् तल्पे शय्यायाम् । 'तल्पं शय्याट्टदारेषु' इत्यमरः । स्पष्ट यथा स्यात्तथा उत्पिष्ट मर्दित बृहत् महत् त्रिविष्टपस्य स्वर्गस्थलोकस्य बल सामर्थ्यं येन । त्रिविष्टपशब्दे 'मंचाः क्रोशन्ति' इतिवत् तत्स्थलक्षणा । क्षोभः सञ्जातोऽस्य तत् क्षोभित बहु क्षोभित क्ष्मापातालतलं येन । भूपातालस्थलोकमर्दनमित्यर्थः । तलेन दलितः शीर्णीकृतः श्वेतः शुभ्रवर्णः अचलेन्द्रः पर्वतः कैलासो येन एतादृशं मम रावणस्य बाहु भुजं उपधानभूतं उपबर्हभूतम् । 'उपधानं तूपबर्हः' इत्यमरः । सुरस्त्रीषु देवस्त्रीषु मध्ये का धन्या सेवितु नो वाञ्छति नेच्छति । एतेन त्रिभुवनमर्दनशालित्वात् महाबलत्व उर्वशीतिरस्कारित्व च सूचितम् । अनुप्रासालंकारः । शार्दूलविक्रीडितं वृत्तम् । उक्तं च–'सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्' इति ॥ ८४ ॥

---

१ क्ष्मा (पृथ्वी) च पातालं च तयोस्तलमित्यर्थः । 'क्ष्मा च पातालतलं च क्ष्मापातालतले बहुक्षोभः संजातोऽनयोस्ते बहुक्षोभिते क्ष्मापातालतले येन तत्' इति वा समासः ।

उर्वश्या परिवीजनेषु मधुरं नृत्यं यथा लीलया
तन्वन्त्या जितशारदेन्दुकिरणच्छायोल्लसच्चामरम्।
आसज्य स्वयमङ्गदस्य शिखरे निर्मोकयन्त्या पुनः
स्नेहस्विन्नविवेपमानकरया सोऽयं भुजः स्पृश्यते ॥ ८५ ॥
एकस्मिन् शयने मया मयसुतामालिङ्ग्य निद्रालया-
मुन्निद्रं शयितेन मच्चरणयोः संवाहनव्यापृता।
पादाग्रेण तिलोत्तमा स्तनतटे सस्नेहमापीडिता
हर्षावेशसमर्पितानि पुलकान्यद्यापि नो मुञ्चति ॥ ८६ ॥
अक्षान् दीव्यति दानवेन्द्रसुतया सार्धं स्मरार्ते मयि
क्रीडायत्नपरिश्रमः पण इति श्रुत्वा गतासह्यताम्।
यत्तो मन्मथवस्तुसंहितविधौ वृद्धौ चिकुरस्पृशा
धूर्तं कारयति प्रयोगचतुरा रम्भोरु रम्भाऽऽह्वया ॥ ८७ ॥

---

उर्वश्येति। मधुरं मनोहरं नृत्यं नर्तनं यथा यथावत् लीलया क्रीडया तनोतीति तन्वती तया। पुनः नृत्यसमाप्त्यनन्तरं इत्यर्थः। परिवीजनेषु वीजनकर्मसु जिता शारदेन्दोः शरत्कालसम्बन्धीन्दोः किरणानां छाया कान्तिर्येन एतादृशं यत् उल्लसत् चामरं प्रकीर्णकम्। 'चामरं तु प्रकीर्णकं' इत्यमरः। अङ्गदस्य केयूरस्य 'केयूरमङ्गदं तुल्ये' इत्यमरः। शिखरे उपरिभागे स्वयं स्वतः आसज्य सम्बध्य तत्र निधायेत्यर्थः। निर्मोकयन्त्या मोचयन्त्या 'निर्मोको मोचने व्योम्नि सन्नाहे सर्पकञ्चुके' इति मेदिनी। वस्त्रकोशात् बहिर्निष्कासयन्त्येत्यर्थः। स्नेहेन प्रेम्णा आन्तरेण केनचित् सात्त्विकभावेन स्विन्नः सञ्जातघर्मः अतएव विवेपमानः विशेषेण कम्पमानः करो यस्याः एतादृश्या उर्वश्या स सुरस्त्रीभिः वाञ्छ्यमानो अयं भुजः बाहुः स्पृश्यते ॥ शार्दूलविक्रीडितं वृत्तम्। लक्षणं तूक्तम् ॥ ८५ ॥

एकस्मिन्निति। एकस्मिन् शयने शय्यायां निद्रायां लयो यस्याः सा निद्रालया तां गाढनिद्रामित्यर्थः। एतादृशीं मयस्य एतन्नामकदैत्यस्य सुतां मन्दोदरीं महिषीमित्यर्थः। आलिङ्ग्य आश्लिष्य उद्गता निद्रा यस्मात् तदुन्निद्रं यथा स्यात्तथा। निद्रारहितं यथा स्यादित्यर्थः। शयितेन 'शीङ् स्वप्ने' इत्यस्मात् गत्यर्थेति सूत्रेण कर्तरि क्तः। 'निष्ठा शीङ्स्विदि मिदि क्ष्विदि धृषः' इत्यनेन कित्त्वनिषेधात् गुणः। मया रावणेन मम चरणे मच्चरणे तयोः मत्पादयोः संवाहने सम्मर्दने व्यापृता कृतव्यापारा। नियुक्तेति यावत्। तिलोत्तमा एतन्नाम्नी देवाङ्गना पादस्य चरणस्य अग्रेण स्तनतटे स्तनप्रान्तभागे सस्नेहं सप्रेम यथा स्यात्तथा आपीडिता सती मर्दिता सती हर्षस्य यः आवेशः भरः तेन समर्पितानि दत्तानि पुलकानि रोमाञ्चान् अद्यापि नो मुञ्चति न त्यजति। देवनार्यो या अपि तिलोत्तमाद्या मत्पादाभ्यां कृतं स्तनमर्दनं हर्षं जनयति। शार्दूलविक्रीडितं वृत्तम् ॥ ८६ ॥

अक्षानिति। रम्भे इव ऊरू यस्याः सा रम्भोरुः तत्सम्बुद्धौ हे रम्भोरु सीते।

सर्वस्वर्गवराङ्गनाधृतिहृति प्रेमप्रधानं मयि
त्रैलोक्याधिपतौ निधाय हृदयं याया जगत्पूज्यताम् ।
नारीमाश्रयसंपदेव नयति श्रेयस्करीमुन्नतिं
मान्या मानिनि कस्य धूर्जटिजटाजुष्टा न जह्नोः सुता ॥८८॥
हस्तौ पल्लवकोमलौ करयुगेनादाय वासः शनै-
रन्येन व्यपनीय पाणियुगलेनामृश्य काञ्च्यास्पदम् ।
मय्यालिङ्गति बाहुभिः सुबहुभिः दोर्पैर्घलक्षाहिमत-
ज्योत्स्नासेकमनोहराधरपुटं वक्त्रं स्वयं दास्यसि ॥ ८९॥

---

दानवेन्द्रस्य मयासुरस्य सुता मदोदरी तया सार्धं स्मरेण मदनेन आर्तः तस्मिन् मयि रावणे अक्षान् पाशान् दीव्यति सति क्रीडति सति ' दिवः कर्म च ' इति साधकतमस्य कर्मसंज्ञा । मन्मथस्य मदनस्य सम्बधीनि यानि वस्तूनि आलिंगनचुम्बनादीनि तेषां यत् संहितं सधानं स एव विधिः विधानं यस्याः एतादृशी या वृद्धिः उत्कर्षः तस्याः दृढालिंगनचुम्बनादि-लाभरूपोत्कर्षे इत्यर्थः । क्रीडायां देवने पणेन यः परिश्रमः स पणः ग्लहः या क्रीडायां निपुणतरा मां जयेत् सा दृढालिंगनचुम्बनादिलाभरूपोत्कर्षं लभेत इति यावत् । इति मत्तः श्रुत्वा विवृद्धा स्पृहा इच्छा यस्याः सा मया सह रमाधिति शेषः । असहला असोढता गता प्राप्ता क्रीडानैपुण्ये सर्वेषां असोढा प्रयोगे क्रीडाप्रयोगे चतुरा निपुणा एतादृशी आह्वया नाम्ना रंभा देवांगना दानवेन्द्रसुतया प्रयोज्यकर्त्र्या द्यूतं कारयति । तत्र तत्र तां शिक्षयित्वा तया द्यूतं कारयतीत्यर्थः । स्वतस्तु न कृतं राज्ञ्या मदोदर्यां विरोधापातात् । तत्र तत्र तस्याः सूचने तु न तथा विरोधः । स्वस्याः द्यूतप्रावीण्यं च सूचितं भवति इति भावः । अनुप्रासालंकारः । शार्दूलविक्रीडित वृत्तम् ॥ ८७ ॥

सर्वेति । सर्वाः याः स्वर्गसम्बन्धिन्यो वरांगनाः तासां या धृतिः धैर्यम् । ' धृतिर्धारणधैर्ययोः ' इत्यमरः । तत् हरतीति सर्वस्वर्गवरांगनाधृतिहृत् तस्मिन् । हृधातोः 'क्विप् च' इति क्विप् । एतादृशे त्रैलोक्यस्य त्रिभुवनस्य अधिपतौ अधीश्वरे मयि रावणे प्रेम प्रधानं यस्मिन् तत् प्रेमप्रधानं सप्रेमेत्यर्थः । हृदयं अन्तःकरणं निधाय स्थापयित्वा जगतः पूज्या जगत्पूज्या तस्या भावः जगत्पूज्यता तां यायाः । याधातोर्विधौ लिङ् । तदेव द्रढयति-नारी-मिति । नारीं स्त्रियं आश्रयस्य संपत् आश्रयसंपत् एव उत्कृष्टाश्रय एवे-त्यर्थः । श्रेयस्करीं उन्नतिं नयति प्रापयति । हे मानिनि सति! धूर्जटेः शंकरस्य या जटा तया जुष्टा सेविता जह्नोः एतन्नाम्नो राजर्षेः सुता भागीरथी कस्य पुरुषस्य मान्या न भवति । अतस्त्वमपि मदाश्रयेण गंगेव सर्वेषां मान्या भवेति भावः । शार्दूलविक्रीडित वृत्तम् ॥ ८८ ॥

हस्ताविति । पल्लवौ किसलयौ ताविव कोमलौ मृदुलौ एतादृशौ हस्तौ करयोः हस्तयोः युगं युग्मं तेन आदाय गृहीत्वा अन्येन अपरेण पाण्योः करयोः

इत्युक्त्वाऽऽदाय रक्षःपतिरवनिसुतामुत्प्लुतो मीनजालै-
श्चित्रं व्योमाम्बुराशिं घनपवनरयास्फालगुञ्जद्घनोर्मिम् ।
पोतेनेव प्रकम्पध्वनिनिवहमसौ बिभ्रता पुष्पकेण
स्फूर्जत्सीतेन यात्रामनुपहतजवव्यापिनीमाललम्बे ॥९०॥

इति जानकीहरणे दशमः सर्गः १० ।

---

युगलेन शनैः मन्दं वासो वस्त्रं व्यपनीय दूरीकृत्य काञ्च्याः मेखलायाः आस्पदं स्थानं आमृश्य ईषत् स्पर्शं कृत्वा सुतरां अन्यत बहुभिः शेषैः उक्तचतुष्टयावन्यैः षोडशभिरित्यर्थः । बाहुभिः भुजैः मयि रावणे आलिङ्गति आश्लिष्यति सति वलक्षं धवलं यत् स्मितं हास्यं सैव ज्योत्स्ना चन्द्रिका तस्या आसेकः सेचनं । पतनमिति यावत् । तेन मनोहरं रमणीयं अधरपुटं अधरोष्ठभागो यस्य एतादृशं वक्त्रं मुखं स्वयं स्वतः दास्यसि । । दाधातोर्लृट् ॥ रूपकालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ८९ ॥

इत्युक्त्वेति । रक्षसां राक्षसानां पतिः रावणः इति पूर्वोक्तप्रकारेण उक्त्वा अवनेः पृथ्व्याः सुतां कन्यां सीतां आदाय गृहीत्वा मीनानां मत्स्यानां जालानि समूहाः तैः चित्रम् पक्षे । मीनः राशिविशेषः तदुपलक्षितानि ज्योतींषि तेषां जालैः समूहैः चित्रं घनः निबिडः यः पवनः तस्य रयो वेगः तस्य आस्फालनं आघातः तेन गुञ्जन्त्यः शब्दं कुर्वन्त्यः घनाः निबिडाः ऊर्मयः तरङ्गाः यस्मिन् । पक्षे घनः यः पवनस्तस्य यो रयः तस्य आस्फालनं ताडनं तेन गुञ्जन्तः शब्दायमानाः घनाः मेघा एव ऊर्मयो यस्मिन् एतादृशं व्योम एव अम्बुराशिः तं उत्प्लुतः सन् असौ प्रकम्पेन ध्वनयः शब्दाः तेषां निवहं समूहं बिभ्रता धारयता पोतेनेव उडुपेनेव प्रकम्पध्वनिनिवहं बिभ्रता स्फूर्जन्ती शोभायमाना सीता जानकी यस्मिन् एतादृशेन पुष्पकेण एतन्नामकविमानेन अनुपहतः अप्रतिहतो यो जवो वेगः तेन व्यापिनी उत्तरोत्तरदेशव्यापिनीमित्यर्थः । यात्रां गमनं आललम्बे स्वीचकार । जगामेत्यर्थः । रूपकश्लेषोपमालङ्काराः ॥ स्रग्धरावृत्तम् 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति लक्षणात् इति शम् ॥ ९० ॥

इति श्री ६ युतपदवाक्यप्रमाणपारावारीणमहामहोपाध्यायपदव्यलंकृतपण्डितप्रकाण्डश्रीकृष्णहाटकरोपनामकश्रीमद्गोपालाचार्यान्तेवासिना निगुडकरोपाभिधेन वासुदेवसुतनारायणशर्मणा विरचितायां महोत्माहाख्य जानकीहरणकाव्यटीकायां दशमः

सर्गः समाप्तः ॥ १० ॥

॥ श्रीराधारमणार्पणमस्तु ॥

# TRANSLATION

OF

## JANKIHARANA.

1 Then (the sage entered the penance grove) covered with knots of trees nurtured and watered by the daughters of the hermits and in which incessantly danced peacocks who were prompted ( to do so ) by the prolonged notes of the numerous Sâma songs (chanted) by sages

2 which had vessels filled with water placed under the trees for birds to drink, and in which the tops of trees were bent down under the weight of the sacred bark garments spread over them to dry

3 where the caverns of the mountain were resorted to by reddish faced monkeys who took away in the hollows of their soft hands their own portions from the *Neevara* grain placed in different heaps

4 where old sages sat motionless although their bodies were stiffened on account of their sitting (in the same posture) *for a long time in order to avoid disturbing the sleep of the* young ones of the deer who having got into their ( sages ) laps were sleeping comfortably

5 which was enveloped in the grey smoke arising from the sacred oblations and spreading itself all round the fire sanctuaries and where guests were made to sit or lie at ease under a fruit bearing tree covered with the filaments of long creepers

6 where infants were crying in consequence of being left to themselves after having been fondled and licked by female deer, while the wives of the ascetics (mothers of those infants) were making the offerings of oblations to the sacred fire

7 where the interior of the fire sanctuary was being cleaned by the ascetics with a handful of *Kusha* grass slowly and carefully for fear of killing the small insects which had come to take away the fried grain scattered about during the offering of the oblations and then collected

8 where cages in the form of nests were prepared and made soft with the tips of (cotton) of the Ishika grass by the

children of the ascetics in order that the young ones of birds dropped down from the trees may lie comfortably (in the nests)

9 where in one place grain was forming on the tips (*of stalks of corn*) *growing in ditches full of water* and earth and where the *Ingudi* fruits (spread out for) drying were scattered about by the frisking of the delighted young ones of the deer, were gathered together in heaps

10 *Kaushika* the abode of religious austerities entered in company of the two princes, the penance grove which resounded with the sounds of over joyed peacocks wafted about by breezes, and sanctified with the fragrance of the sacrificial offerings

11 Then the venerable (sages) desirous of performing the (*Ishti*) sacrifice intended for the gods directed the vigilant son of the king, who had come there for the task of guarding to undertake the duty

12 The son of the monarch, who had his bow ready while patrolling round the sage who was kindling the fire of the sacrifice *to protect him from the enemy*, *being attracted* by the beauty of the forest spoke to his younger brother

13 This penance grove of the ascetics is always full of *Neevara*, has the beauty of a lotus lake, contains a natural lake a trough of water and stalks of grain which (grows) wild and always bears excellent fruit

14 Here, penance was practised with certain objects of the world in view by that ancient man, the eternal reality, whom ascetics well-versed in the Vedas and the Vedangas comprehend with great difficulty

15 Here the primeval man worshipped fire—one of the forms of the three eyed God, with oblations it was fanned by the wings of his bird (Garuda) and fuel cut by the *Sudarshana* was brought for it

16 When its master who was the destroyer of his enemies practised penance the restrained *Nandaka* became intent solely on cutting sacrificial sticks and *Kusha* grass and could not take delight in the wine in the form of the blood of the breasts of demons

17 Then the *Gada* ( mace ) did not go to the dreadful battle-field in which drums were sounding to smash the heads

of the enemies and devour the marrow in them—the helmets of which heads were crushed and which spread horror.

18. The *Panchajanya* (conch) which favoured the new *forests of trees with the stream of water brought in its hollow,* did not, with its sounds dreadful like dry thundering, now create awe in the (minds of the) people on the battle field

19. Then *Padmâ* gracefully sitting on her throne of the lotus having an erect stem, and touching the crests of the moving waves with her foot hanging forward, did not sing sweetly.

20 Then, the lord of birds did not sit on the eastern mountain, to spread his huge wings in front of the sun in order to dry them when wetted by the waters of the ocean, at the time of picking up serpents from it.

21. From this place did the greatly enraged *Hari* go *forth to subdue Bali, leaving off roaming in the forest*—which supplied him with necessaries—as also his bark-garment, after softening his matted hair.

22. Since that time, this comfortable and peaceful abode of the ascetics is inhabited by a number of beasts who have forsaken their harmfulness on account of their being strongly imbued with (*Sattva*) the quality of Hiranya garbha

23 Look here at the tiger in your front, whom the boys of the ascetics have, through rashness, caught by its tail to count the spots which are black as if painted with ink on its body

24. *This lion and this frog, who have cast away their* fierceness and shyness *respectively, are seeking* (the one) the space underneath an elephant whose temples are flowing with ichor, and (the other) the umbrella of the hood of a serpent as they are(both)extremely scorched by the sun's rays

25 As he was uttering these words, the army of the enemies shaking the forest by the winds set by its speed and *spreading over the whole heaven and the earth,* became visible with its banners marked with (pictures of) crows

26. Having transferred (lit implanted) the reflected images of the enraged demons, in the blade of his sword, which was brilliant like the autumnal sky, he stood there with the desire of swallowing the life of the fighters, and appeared like Yama.

27. *The innumerable soldiers, who were there, said that* the world which was thickly crowded with lines of goblins and demons and was filled with darkness by the dust of the wheels of chariots, was full of Sattva (goblins). Rajas (dust) *and Tamas (darkness)*

28 The first (Ramchandra), *who was supreme in valour* and fought on foot, made the army of enemies, moving in heaven, his mark His younger brother fought with (*lit.* destroyed) the line (of enemies) standing on the earth and containing numbers of huge elephants and speedy horses

29. In the fight, the elephants who were pierced by the arrow of Râma and whose drivers with great haste left hold of their necks, hurt their own warriors [redacted] they fell down on the earth from heavens dragging the clouds with them

30 The line of his arrows could not be seen by others either on the bow or in their course or in piercing the mark the demons therefore fell down in the war, with their breasts wounded apparently, even without any cause.

31. The *arrows, discharged from* the bow of this warrior, flew with (*lit. assumed*) *such excessive speed, that the* sounds made by the falling of the enemies were heard simultaneously with twangings of his bow strings

32 A number of weapons, which were dropped from the hands of the demons, before reaching their mark, swam for a long time in the sky, like dry leaves, having been scattered by the wind set up by his showers of arrows

33 The enemies of the gods were struck forcibly by their own arrows, which were turned back in the direction opposite to their course, by the gust of wind from the arrows of the prince, which flew with a sound caused by the feathers attached to them

[redacted] That army struck by the arrows of the prince and falling from the (sky) path of the arrows, was abandoned in the middle, by its vital airs (life) as if they were afraid of being contaminated by a fall on the polluted earth

35 The elephants of the enemies whose heads were shaken by the pricking of the sharp goad, as it were through fear, solicited, with their trunks raised to their temples (the mercy) of him who was striking them in war

36 A haughty elephant, beholding the tusks of another elephant near him, thrown off by its roots being cut regretted having come to the fight and for a moment changed his mind

37. Another elephant at once contracted its trunk which it had thrown up to strike its adversary, and when it (the trunk) was pierced and nailed down into a circle by an arrow, could not uncurl it

38 Some one who was nailed down to his horse being pierced in the thighs by the swift arrow of Rama, did not stir from his seat, though his horse maddened by fear committed a fault (bolted)*

39 A certain firm seated demon, though his feet were lopped off at the knees, by a pair of crescent-shaped arrows of the enemy, did not fall down from his galloping horse

40 Another demon running against his enemy to kill him had his head severed by the arrow of his foe, though his life left him, he went a few steps on account of his original inertia

41 Falling furiously on the temple (of an elephant) a certain warrior) caused in a moment an elephant——appearing like a fleeting cloud, and gifted with ear *Chaurees* in the form of white clouds divided into two—to rapidly move in heaven

42 In the battle, another one brought down to the ground his horse, who on account of his great velocity scattered about on all sides the intestine which had issued from the wound in its belly, that was inflicted by an arrow, and which (intestine) had been cut to pieces by the dashing of the tips of his hoofs

43 A demon whose arm was suddenly lopped off by the discus of the son of Sumitra and was discoloured, furiously used it as a weapon, shaking the whole place by his roar and hurled it at the son of the monarch

44 A discus hurled by another one, stuck by its half on the top of the enemy's club, the roaring enemy now used the club (with the half discus at its extremity) as a battle axe and struck him (the son of Dasharatha) on the head

45 The son of the ruler after throwing down the weapon from the machine in his hand a whole host of the enemies of the gods now for battle, drew out his sword from its sheath like a cobra from its hole

*The commentary seems to have made an effort to interpret some reading "कृपाय"

46 The lion among men, pinned the two sides of his adversary's body which had been cut into two, by the sword of Saumitri made it into one. May be through anger or through sport

47 The son of the monarch, struck at an elephant which was running for battle with its trunk lifted up by coming in contact with the sword which was meant to cut it into pieces, but the trunk was wound up instead.

48 The lower half of a rider cut by the sword did not fall down (as it remained in position), on account of the firm grip of the thighs, while the upper half dangled in front on account of the clenched fist being seized by the reins of the horse

49 When the sword of the enemy dashed on the head of one of the demons he fell down with his body prostrate on his back, as if because he was unwilling to show his back in battle to his enemy, even after the loss of his life and his haughtiness

50 The bodies of the demons were wetted by the blood trickling from their abdomen pierced by a sword but they were again dried up by the blowing of their breaths in vigorously dealing blows to one another

51 Then the first among princes having his garments reddened with the sprinkling of the scattered blood of his foe and bent upon securing (marrying) the glory consequent upon victory, made the vultures (Brahmins) satiated by eating and drinking as much as they liked for a long time

52 Then that leader who jostled and burnt the bodies of Marich and Subahu by the wind and fire missiles drove to the farthest end the vast powerful army which had become quite effeminate through fear

53 That archer whose heart was full of compassion bent his bow with ease and slowly discharged his arrows on the loins of the enemies' elephants who had turned away their fronts (from his sharp arrows)

54 The army of the exceedingly powerful enemy could not stand the attacks of Rāma who was aided by his brother's prowess and who was terrible like the fall of dry lightning and who was endowed with the radiance of the sun at the time of final destruction.

55 These arrows standing on the strong bow-string, receiving a sudden discharge and possessing tips of well-adjusted blades, gave advice to the soldiers of the enemy to go to the assembly in heaven (death) [and in doing so they were] like the Buddhist ascetics who, living in extraordinary goodness instantly obtained complete emancipation, the brightness of whose races indicated the fruitfulness of the proper adoption of judicious method and who gave advice how to go to the assembly of the gods

56 When the lord had made sacrificial offerings in the shape of enemies to the fire *viz* death and was espousing a brave maiden in the form of the goddess of Victory, there danced under the sound of the kettle drum, headless bodies covered with abundance of bright vermilion in the form of coagulated blood

57 The foreparts of the bodies of goblins after falling on the ground, stood erect and thereby spread horror, as if they were demons half-sprung out of the ground for the purpose of fighting, being cut, since the Rakshasas had turned away their faces from the battle

58 The clouds, having a red colour on account of their repeatedly coming in contact with streams of blood of demons wounded by the weapons of Rama, brought about in the sky an untimely evening devoid of the existence of the bustle of Shankara's salutation.

59 At the dispersing of the masses of clouds in the forms of elephants, horses and moving chariots, the sky having become, clear of continuous showers of arrows and of lightning in the form of flashes of swords, acquired the autumnal splendour, in which the sun distinctly comes to view

60 A collection of crows who cawed gently and who had filled the cavities of their bellies with the fat of the demons and who sat on the forehead of the elephants, struck down by the arrows of Kakutstha, cleaned their beaks besmeared with blood, on their tusks.

61 The two princes, adored by the offering of the shedding of joyous tears on the part of the youths of the hermitage and having been welcomed by the flocks of deer went to the huts and placed the pair of heads (that of Subhahu and Máricha) cut away by their shafts, at the feet of their preceptor.

# CANTO VI

1

1 Then the Creator of a portion of the universe started [on a journey] to confer favours on the Lord of Mithilâ who was the first among house-holders and who had just commenced [the performance of] a sacrifice

2-5 The ascetic—bearing [on his head] the matted hair, the brightness of which was heightened by the bathings connected with the Sandhyâ ceremony, which were of a golden brown colour like that of the tips of the awn of paddy and which were like the flames of the fire of asceticism [who himself was] dazzling with the radiance of his penance and [was] attractive (cooling) through the quality of tenderness [being] thus comparable to the ocean which simultaneously displays the rise of the Sun and the Moon who by the rosary of the Rudrâksha fruits hanging down his head made his matted hair creepers [look] as if laden with fruit in consequence of being watered by the sprinklings of holy water who was offered auspicious presents by sylvan nymphs issued forth from the sacrificial precincts as the blazing Sun [bursts out] from a dark cloud

6-8 Having with difficulty stopped the herd of deer that had been personally reared by him from accompanying him, he led the two sons of the lord of the earth, who were anxious to behold the bow [of Shankara] whose eyes were filled with tears [of joy] who during the act of saluting just at the mention of departure were touched on the head by great sages with their hands made fragrant by the smoke of sacrificial offerings, and who had pronounced benedictions on the young damsels of hermits on receiving the Arghya proferred by them

9 Then the self subdued one entered the long deserted abode —which was situated on the road, of Gautama the dispeller of darkness and the possessor of lustre like that of fire

10 13 In the uneven lands of the court yards of [which] cottage elephants were engaged in making mouthfuls of the Darbha grass grown in clusters in some parts of which cottage] were worn out bark garments eaten into by white ants, in others there were scattered about black antelope skins nibbled and cut up by wild rats elsewhere

were the roots of trees as if wetted by the water [from the body] of the snake come out of the mouth of an old water-pot placed on the ground (hard by) while in another place the snakes encircling the statue of Vishnu were pulled out by ichneumons from the opening in the cavity of the abdomen [of the statue] as if they [its] were entrails

14. There Râma asked the cause of the curse to the brilliant female form who was made to give up its petrified body by the touch of his foot

15 "Formerly Indra" saying this much she, who hung down her head through shame, gave expression about her indescretion during youth even without uttering [a word more]

16 Then Râma went to that country (where sprang into being) where was the origin of the violent Maruts from the shreds of the embryo mangled by Puruhûta

17 Those [three] who journeyed over the road with confidence on account of a clear knowledge of it and on account of being guided by the radiance of the jewels of the triumphal arches thus spoke to Râma words which were pleasing to the mind

18 The trees on the out skirts of which having the barks of their trunks bruised and peeled off by the halter-ropes of infuriated elephants declare, as it were, its invincibility

19 Where the maker of night (the Moon) whose orb is situated in the middle of the sky becomes a (covering) lid to the circle of the rampart touching clusters of clouds

20 The moat of which [city], ornamented with large white lotuses interspersed with blue ones and displaying the beauty of swarms of bees alighted in the middle (*lit* acts the ocean) resembles the ocean

21 Whose close collection of houses—being engirt all round by the heap of earth from the moat like a rampar resembling the body of the Ajagara serpent (or containing Ajagaras)—looks huddled up, as it were through terror

22 The horses of the moon exhausted by their speed drink the oozings from the moon stones suspended on the extreme points of the dovecots on the gates of the city.

23 The collection of houses in which of with its 'body' resembling in form the thousand rayed sun by means of the numerous dovecots shows itself like Bhârgava who with his Parashu had the build of Kârtavîrya

24 Where the disc of the sun, though on the meridian *lit* in the middle of the sky, looks like the morning sun in consequence of being struck by the radiance of the red stones the situated on the pinnacles of its temples

25 Where the rays of the precious stones on the tops of mansions dispelling all darkness confuses knowledge [des crimination] among the inhabitants about the two halves of the months *viz* the bright and the dark one

26 Where the face moons of the royal courtezans seated in the windows make the young-men who walk about the streets to stumble at every step

27 Where the serpent-strappings of the horses of the sun become loose on their hearing the cries of the royal peacocks [perched] on the terraces of palaces

28 Where even at night despondency does not over come the Chakravâkas of the ponds seen by the light of the jewels which are fixed in the stone steps and by which portions of darkness are dispersed

29 Where the horses of the sun having come near the mansions (of the city) slacken their speed in consequence of their minds being attracted by the concert of music to the accompaniment of the Vâni

30 This splendid city the home of the King of Mithilâ be littles the city of Indra by the splendour of the enjoy ments of its inhabitants

31 While thus talking (along the road) the two sons of the leader [of monarchs] were conducted by him to the highly flourishing City of that mighty performer of sacrifices

32 That hermit after having received water to wash his feet accepted with tears of joy the throne of the ruler of the earth covered with a lion skin

33 He spoke words of praise encouraging the sacrificer in the sacrificial session the praise bestowed by one who is indifferent to worldly ties even before a king is certainly glorious

34 'That line of religious observances which had been adopted by Sagara and others by means of sacrifices has been kept up by thee who art a suzerain monarch'

35 'In spite of thy being in the decline of years the grandeur of the preperation of sacrificial session declares, as it were, the glory of thy valour to be on the increase'

36 'Thy fame which has gone beyond the sea-shore and occupied the whole of the vault of the sky with rapidity still goes on with ardour, and as [hence] like the *Abhisarika* who has been over due at an appointmet, who has hastily tucked up her garment and who makes long strides through eagerness

37 May be this celestial sacrifice is for thy own benefit or I hope it only manifests a liberality towards the needy without a desire of fruit

38 'I hope after taking taxes from the rich thou showerest them on the poor just like a cloud which drinks in water from rivers and showers it on dry lands

39 'Having during youth led thy servants to gain kingdom I hope thou takest care of them with kindness at the time when they have reached old age and are emaciated

40 I hope thou protectest in an appropriate manner like thy own kindred the wives of thy enemies who have been made widows by thy valour and who are [now] solicitous about the lives of their children

41 'Of the three (objects of life) Dharma at first [rightly] kept pace with the other two for a long time now, however I hope the same Dharma gains predominance in thee along with old age'

42 On the cessation of these enquiries of the sage the king of the Videhâs discovered that Râma and Laxmana were desirous of seeing his bow

43 The momentary raising of one eye brow bow of the Lord of the Earth became an inciter to the attendants for the bringing out of the bow

44-47 A powerful planet eager to make a mouthful of the radiance of the face moon orb of the bridegroom, a second obstructing latch to the happiness of a marriage union with Sitâ one which in consequence of excess of poignant grief

rom its being deserted by Shiva had lain for a long time without any noise in an iron case, which was not pliable but firm and unbendable even by the string, which was shown a partiality by Shiva and which was incapable of being managed like a low rogue such a bow, which was the price for the gaining of Sitâ—did the son of Dasharatha, who had made the lustre of his nail tips as an ornament to his ear, lift up and make into a circle

48 Then spread out in all directions a terrific sound arisen from the breaking of the bow, and which was a drum anouncing the fame of Râma !

49 The whole city—the seat of virtue having Sitâ in it and surrounded by ramparts, and prolific in yield—forthwith began to tremble

50 The ruler of the earth, shedding by the flow of tears the joy arisen in his mind under the excuse of horripilation addressed the sage (thus) —

51 'Even in [my] old age the ardour for penance has been necessarily interrupted by the important debt *viz* wealth in the form of a female which was to be paid on the breaking of the bow '

52 'That [debt] has now gone into the service of Râma having been gained over by the barter of prowess Know, then oh sage ! that on his second [brother] is even bestowed my Urmilâ '

53 He who was practising penance extracted by means of an infallible process the core seated seton known as 'anxiety' which originated from the delay in the marriage of Sitâ.

54 Now a chariot—the vehicle of the minds of both the kings, and one setting at rest the desire of a host of (other) princes (for Sita)—was occupied by message-bearers and started for Ayodhyâ

55 Though vanquished by the beauty of Râma there was no absence of energy in Madana resulting from the pain of disgrace [this was because] by Shiva with the force of the flame of the eye on the forehead was conferred bodilessness to the mind-born one for his own welfare

